ददते, प्राणिनामिति शेष', सर्वदैव सर्वेषा सौख्यदानात् । किंविशिष्ट आ ? 'राजा' राजते–दीप्यते विश्वव्यापिप्रभाभिरिति राजा । इदमपि श्रीसूर्यसेवकानामेव वचनम् ॥२॥

*अथ पुन प्रकारान्तरेण श्रीब्रह्मविष्णुशिवदेवानाश्रित्यार्थमाह—*

**रा-अज-अ-अ न. अददत ईसौख्यम् ॥ ३ ॥**

"रा रमा रमणी वाला" इति विश्वशम्भुवचनात् रा तत्पर्यायत्वात् श्रीः । तथा अज –ब्रह्मा । "अ कृष्ण" इति श्रीअमरवचनात् अ –श्रीकृष्ण । तथा "अ शिवे केशवे वायौ, ब्रह्मचन्द्राग्निभानुषु" इति विश्वशम्भुवचनप्रामाण्यात् अ –शिव । तत अजश्च अश्च अश्च अजा । (रया–) श्रिया उपलक्षिता अजा (राजा –) श्रीअजा – श्रीब्रह्मविष्णुशिवाख्यास्त्रयोऽपि देवा' न –अस्माक, "ई श्री " इति श्रीअमरकविवचनप्रामाण्यात् ई –श्री तस्या तत्सम्बन्धि वा सौख्य–सुखं ईसौख्य ऋद्धिसौख्यमिति यावत् अददत–अदुरित्यर्थ । इद तत्तत्सेवकाना वचनम् ।

अत्र राशब्दो व्यवधानेन श्रीप्रतीतिकृदपि श्लेषचित्रादित्वात् न दोषभाक् । यथा—

"येन ध्वस्तमनोभवेन बलिजित्काय पुराऽस्त्रीकृतो
यश्चोद्वृत्तभुजङ्गहारवलयो गङ्गा च योऽधारयत् ।[1]
यस्याहु शशिमच्छिरो हर इति स्तुत्य च नामामरा
पायात् स स्वयमन्धकक्षयकरस्त्वा सर्वदोमाधव.॥१॥"[2][3]–शार्दूलविक्रीडितम्

इत्यादि । एवमग्रेऽपि सति प्रयोजनेऽनुसर्तव्यम् ॥ ३ ॥

---

१ 'यो गङ्गां च दधेऽन्धकक्षयकरो यो बर्हिपत्रप्रिय ' इति पाठ सुभाषितरत्नभाण्डागारे ।

२ 'सोऽव्यादिष्टभुजङ्गहारवलयस्त्वा सर्वदोमाधव ' इत्यपि पाठ सुभाषितरत्नभाण्डागारे ।

३ इद कूटकाव्य तस्मादस्य टिप्पणक दीयते, हरपक्षे यथा–स उमाधव –पार्वतीपति त्वा सर्वदा–सदा पायात्–रक्षतु । स किंभूतः ? यो गङ्गामधारयत् येन बलिं जितवानिति बलिजित्–विष्णु तस्य काय –शरीर पुरा–त्रिपुरवध काले अस्त्रीकृत –अस्त्रत्वेन सम्पादितः । किंभूतेन येन ? 'ध्वस्तमनोभवेन' ध्वस्त –क्षपित मनोभव –रतिपतिर्येन स तेन । पुन किंभूत सः ? 'यश्चोद्वृत्त॰' हाराश्च वलयानि च हारवलयम्, उद्वृत्ताश्च ते भुजङ्गाश्च उद्वृत्तभुजङ्गा, ते हारवलय यस्य स, उद्वृत्तभुजङ्गा –सर्पा हार –कण्ठाभरण वलय–कटक भुजभूषणमित्यर्थः । पुनः स किंभूत ? यस्य शिर –मस्तक 'शशिमत्' शशी–चन्द्रोऽस्ति यस्मिन् तत् शशिमत् । पुन स किंभूत ? यस्य स्तुत्य–प्रशसनीय नाम–अभिधान अमरा–देवा इति आहु –अकथयन् । इतीति किम् ? हर इति–महादेव इति । पुन स किंभूत ? स्वय–आत्मना अन्धकनामा दैत्य तस्य क्षयकर –अन्तकृत् ।

हरिपक्षे यथा—

येन ध्वस्तमनो भवेन बलिजित्कायः पुरा स्त्रीकृतो
यश्चोद्वृत्तभुजङ्गहा रवलयो ग गां च योऽधारयत् ।
यस्याहुः शशिमच्छिरोहर इति स्तुत्य च नामामराः
पायात् स स्वयमन्धकक्षयकरस्त्वां सर्वदो माधव ॥ १ ॥

सर्व–समस्त ददाति–प्रयच्छतीति सर्वदः स माधव –लक्ष्मीपति मा–लक्ष्मीः तस्या धव –पतिः माधवः त्वां पायात्–अवतु । स क ? येन भवेनेपुनर्भवाभावेन [illegible], अन [illegible] ध्वस्त–अभावि, अथवा [illegible] कृत्वा [illegible] पूर्वकर्मानुसारेण न विद्यते भवो–जन्म यस्य स तेन [illegible]

## रा अजा नो ददते सौख्यम् ॥ ४–८ ॥

"रा रमा रमणी बाला" इति (विश्वशम्भु)वचनाद् रा–रमणी नः–अस्मभ्य सौख्य ददते । किंविशिष्टा रा? 'अजा'। "अजश्छागे हरे विष्णौ, रघुजे वेधसि स्मरे" इति हैमानेकार्थ(श्लो० ८०)वचनात् अज–हर १ विष्णु २ रघुज ३ ब्रह्माण ४ स्मर ५ वा । अटति अतति–गच्छतीति अजा–पार्वती १ लक्ष्मीः २ इन्दुमती ३ सावित्री ४ रतिश्च ५ । इद तत्तद्भक्ताना वचनम् । अर्थाः ५ सर्वे ॥ ४–८ ॥

## राज ! आः नो दद ! ते सौख्यम् ॥ ९ ॥

"रा रमा रमणी बाला"इति ( विश्व० )वचनाद् रा–लक्ष्मीः । ततः "जश्च जेतरि जनने विगते" इति सुधाकलश(श्लो० १८)वचनात् ज –जनन यस्य स राजः कन्दर्पः लक्ष्मीनाममातृजातत्वात् । तत्सम्बोधनं हे राज !–हे कन्दर्प ! । "आः सन्तापकोपयो " इति तिलकानेकार्थवचनात् आ इति कोपे । ते–तुभ्य सौख्य–सुख नो–न, अस्तु इति शेष । तव सुख माऽस्तु इत्यर्थ । यतः हे दद ! "द कलत्रम्" इति सुधाकलश(श्लो० २५)वचनात् द–कलत्र द्यति–खण्डयति–पीडयतीति ददः, अबलासन्तापकारक इत्यर्थ । तत्सम्बोधन हे दद ! । इद कान्तविरहे कामपीडितायाः कामिन्याः काम प्रति आक्रोशदानवचनम् ॥ ९ ॥

## रा आजा नः अददत ईसौख्यम् ॥ १० ॥

"आ स्वयम्भू " इति श्रीअमरकविवचनात् आ–ब्रह्मा ततो जा–जाता आजाः श्रीसरस्वती देवीत्यर्थ । न –अस्माक अस्मभ्य वा ईसौख्य–लक्ष्मीसौख्य अददत–अदत्तेत्यर्थः। किंविशिष्टा आजा? 'रा' राजते–दीप्यते–शोभते । 'क्वचिड्डु.' (सिद्धहेमे अ० ५, पा० १, सू० १७१ ) इति डप्रत्यये अपि च रा ॥ १० ॥

## राजा नो ददते सौख्यम् ॥ ११ ॥

"र जले रङ्गवेगयो " इति विश्वशम्भुवचनात् रेण–रङ्गेण अजेन–छागेन वाहनरूपेण अजति–गच्छतीति राजा–अग्नि , छागवाहनत्वात् नो–न सौख्य ददते–ददाति, दाहकत्वात् । अथवा न –अस्माक सौख्य–सुख ददते, रन्धनशीताद्यपहारकत्वेन परमोपकारकत्वात् ॥ ११ ॥[2]

---

विग्रह इति । पुन स कीदश ? येन सुधाविभागार्थं शिवमोक्षार्थं वा बलिनिचासौ कायश्चेति पुरा स्त्रीकृत –स्त्रीभाव प्रापित । पुन कीदश ? य अग–गोवर्धननामगिरिं गा–पृथ्वीं च अधारयत्–दधे । पुन कीदश ? य अ–धे–अगाधे के–जले क्षय–गृह करोतीति, विष्णुर्जलशायीति प्रसिद्धि । पुन कीदश ? भमरा यस्य इति स्तुत्य नाम आहु । इतीति किम्? शशिमच्छिरोहर इति, शशिन–चन्द्र मश्नातीति शशिमत्–राहु तस्य शिरो हरतीति स । पुन कीदश ? उद्धृतो भुजङ्गहा–गरुडो यस्य स , तथा रवे–परमब्रह्मणि लय –एकाग्रता यस्य स अथवा भकार प्रक्षेप कृत्वा भर–सुदर्शननामचक्र वलय यस्य स ।

१ अयमङ्कोल्लेख श्रीसुधाकलशमुनीशकृतैकाक्षरीनाममालिकाया आधारेण सूचित । २ अत्र द्वौ अर्थौ पृथग् ज्ञेयौ न वेति प्रश्न ।

ददते, प्राणिनामिति शेष', सर्वदैव सर्वेषा सौख्यदानात् । किंविशिष्ट आ ? 'राजा' राजते–दीप्यते विश्वव्यापिप्रभाभिरिति राजा । इदमपि श्रीसूर्यसेवकानामेव वचनम् ॥२॥

अथ पुन प्रकारान्तरेण श्रीब्रह्मविष्णुशिवदेवानाश्रित्यार्थमाह—

**रा-अज-अ-अ न. अददत ईसौख्यम् ॥ ३ ॥**

"रा रमा रमणी बाला" इति विश्वशम्भुवचनात् रा तत्पर्यायत्वात् श्री । तथा अज –ब्रह्मा । "अ कृष्ण" इति श्रीअमरवचनात् अ –श्रीकृष्ण । तथा "अ शिवे केशवे वायौ, ब्रह्मचन्द्राग्निभानुषु" इति विश्वशम्भुवचनप्रामाण्यात् अ –शिव । तत अजश्च अश्च अश्च अजा । (रया–) श्रिया उपलक्षिता अजा (राजा –) श्रीअजा – श्रीब्रह्मविष्णुशिवाख्यास्त्रयोऽपि देवा' न –अस्माक, "ई श्री" इति श्रीअमरकविवचनप्रामाण्यात् ई –श्री तस्या तत्सम्बन्धि वा सौख्य–सुख ईसौख्य ऋद्धिसौख्यमिति यावत् अददत–अदुरित्यर्थ । इद तत्सेवकाना वचनम् ।

अत्र राशब्दो व्यवधानेन श्रीप्रतीतिकृदपि श्लेषचित्रादित्वात् न दोषभाक् । यथा—

"येन ध्वस्तमनोभवेन बलिजित्काय पुराऽस्त्रीकृतो
यश्चोद्वृत्तभुजङ्गहारवलयो गङ्गा च योऽधारयत् ।
यस्याहु शशिमच्छिरो हर इति स्तुत्य च नामामरा
पायात् स स्वयमन्धकक्षयकरस्त्वा सर्वदोमाधव.॥१॥"[3]–शार्दूलविक्रीडितम्

इत्यादि । एवमग्रेऽपि सति प्रयोजनेऽनुसर्तव्यम् ॥ ३ ॥

---

१ 'यो गङ्गा च दधेऽन्धकक्षयकरो यो बर्हिपत्रप्रिय ' इति पाठ सुभाषितरत्नभाण्डागारे ।

२ 'सोऽभ्यादिष्टभुजङ्गहारवलयस्त्वा सर्वदोमाधव ' इत्यपि पाठ सुभाषितरत्नभाण्डागारे ।

३ इद कूटकाव्य तस्मादस्य टिप्पणक दीयते, हरपक्षे यथा–स उमाधव –पार्वतीपति त्वा सर्वदा–सदा पायात्–रक्षतु । स किंभूत ? यो गङ्गामधारयत् येन बलिं जितवानिति बलिजित्–विष्णु तस्य काय –शरीर पुरा–त्रिपुरवधकाले अस्त्रीकृत –अस्त्रत्वेन सम्पादित । किंभूतेन येन ? 'ध्वस्तमनोभवेन' ध्वस्त –क्षपित मनोभव –रतिपतिर्येन स तेन । पुन किंभूत स ? 'यश्चोद्वृत्त०' हाराश्च वलयानि च हारवलयम्, उद्वृत्ताश्च ते भुजङ्गाश्च उद्वृत्तभुजङ्गा , ते हारवलय यस्य स , उद्वृत्तभुजङ्गा –सर्पा हार –कण्ठाभरण वलय–कटक भुजभूषणमित्यर्थ । पुन स किंभूत ? यस्य शिर –मस्तक 'शशिमत्' शशी–चन्द्रोऽस्ति यस्मिन् तत् शशिमत् । पुन स किंभूत ? यस्य स्तुत्य–प्रशसनीय नाम–अभिधान अमरा–देवा इति आहु –अकथयन् । इतीति किम् ? हर इति–महादेव इति । पुन स किंभूत ? स्वय–आत्मना अन्धकनामा दैत्य तस्य क्षयकर –अन्तकृत् ।

हरिपक्षे यथा—

येन ध्वस्तमनो भवेन बलिजित्काय पुरा स्त्रीकृतो
यश्चोद्वृत्तभुजङ्गहा रवलयोऽग गां च योऽधारयत् ।
यस्याहु शशिमच्छिरोहर इति स्तुत्य च नामामरा
पायात् स स्वयमन्धकक्षयकरस्त्वा सर्वदो माधव ॥ १ ॥

सर्व–समस्त ददाति–यच्छतीति सर्वद स माधव –लक्ष्मीपति मा–लक्ष्मी तस्या धव –पति माधव त्वा पायात्–अवतु । स क ? येन भवेनेत्युत्पन्नमात्रेण धृतदेहेनेत्यर्थ , अन –शकटाकृतिदानव ध्वस्त–अघानि, अथवा अकारप्रश्लेष कृत्वा अभवेनेति घोरससारसमुद्रे पूर्वकमानुसारेण न विद्यते भवो–जन्म यस्य स तेन कृष्णलीलामृत

## रा अजा नो ददते सौख्यम् ॥ ४–८ ॥

"रा रमा रमणी वाला" इति (विश्वशम्भु)वचनाद् रा–रमणी नः–अस्मभ्यं सौख्य ददते । किंविशिष्टा रा? 'अजा' । "अजश्छागे हरे विष्णौ, रघुजे वेधसि स्मरे" इति हैमानेकार्थ(श्लो० ८०)वचनात् अज–हर १ विष्णु २ रघुज ३ ब्रह्माण ४ स्मर ५ वा । अटति अतति–गच्छतीति अजा–पार्वती १ लक्ष्मीः २ इन्दुमती ३ सावित्री ४ रतिश्च ५ । इद तत्तद्भक्ताना वचनम् । अर्था ५ सर्वे ॥ ४–८ ॥

## राज ! आः नो दद ! ते सौख्यम् ॥ ९ ॥

"रा रमा रमणी वाला"इति (विश्व०)वचनाद् रा–लक्ष्मीः । ततः "जश्च जेतरि जनने विगते" इति सुधाकलश(श्लो० १८)वचनात् ज–जनन यस्य स राजः कन्दर्पः लक्ष्मीनाममातृजातत्वात् । तत्सम्बोधनं हे राज !–हे कन्दर्प ! । "आ सन्तापकोपयो" इति तिलकानेकार्थवचनात् आ इति कोपे । ते–तुभ्य सौख्यं–सुख नो–न, अस्तु इति शेष । तव सुख माऽस्तु इत्यर्थ । यत हे दद ! "द कलत्रम्" इति सुधाकलश(श्लो० २५)वचनात् द–कलत्र द्यति–खण्डयति–पीडयतीति ददः, अवलासन्तापकारक इत्यर्थ । तत्सम्बोधन हे दद ! । इद कान्तविरहे कामपीडितायाः कामिन्या कामं प्रति आक्रोशदानवचनम् ॥ ९ ॥

## रा आजा नः अददत ईसौख्यम् ॥ १० ॥

"आ स्वयम्भूः" इति श्रीअमरकविवचनात् आ–ब्रह्मा ततो जा–जाता आजाः श्रीसरस्वती देवीत्यर्थ । न –अस्माक अस्मभ्य वा ईसौख्य–लक्ष्मीसौख्य अददत–अदत्तेत्यर्थः। किंविशिष्टा आजा? 'रा' राजते–दीप्यते–शोभते । 'क्वचिड्डः' (सिद्धहेमे अ० ५, पा० १, सू० १७१) इति डप्रत्यये अपि च रा ॥ १० ॥

## राजा नो ददते सौख्यम् ॥ ११ ॥

"र जले रङ्गवेगयो" इति विश्वशम्भुवचनात् रेण–रङ्गेण अजेन–छागेन वाहनरूपेण अजति–गच्छतीति राजा–अग्नि, छागवाहनत्वात् नो–न सौख्य ददते–ददाति, दाहकत्वात् । अथवा न –अस्माक सौख्य–सुख ददते, रन्धनशीताद्यपहारकत्वेन परमोपकारकत्वात् ॥ ११ ॥[2]

---

विग्रह इति । पुन स कीदृश ? येन सुधाविभागार्थं शिवमोक्षार्थं वा बलिनिचासौ कायश्चेति पुरा स्त्रीकृत –स्त्रीभाव प्रापित । पुन कीदृश ? य अग–गोवर्धननामगिरिं गा–पृथ्वीं च अधारयत्–दधे । पुन कीदृश ? य अघे–अगाधे के–जले क्षय–गृह करोतीति, विष्णुर्जलशायीति प्रसिद्धि । पुन कीदृश ? भ्रमरा यस्य इति स्तुत्य नाम आहु । इतीति किम् ? शशिमच्छिरोहर इति, शशिन–चन्द्र मश्नातीति शशिमत्–राहु तस्य शिरो हरतीति स । पुन कीदृश ? उद्धृत्तो भुजङ्गहा–गरुडो यस्य स, तथा रचे–परब्रह्मणि लय –एकाग्रता यस्य स अथवा अकारप्रश्लेष कृत्वा अर–सुदर्शननामचक्र वलय यस्य स ।

१ अयमङ्कोल्लेख श्रीसुधाकलशमुनीशकृतैकाक्षरीनाममालिकाया आधारेण सूचित । २ अत्र द्वौ अर्थौ पृथग् ज्ञेयौ न वेति प्रश्न ।

ददते, प्राणिनामिति शेष', सर्वदैव सर्वेषा सौख्यदानात् । किंविशिष्ट आ ? 'राजा' राजते–दीप्यते विश्वव्यापिप्रभाभिरिति राजा । इदमपि श्रीसूर्यसेवकानामेव वचनम् ॥२॥

अथ पुन प्रकारान्तरेण श्रीब्रह्मविष्णुशिवदेवानाश्रित्यार्थमाह—

रा-अज-अ-अ न. अददत ईसौख्यम् ॥ ३ ॥

"रा रमा रमणी वाला" इति विश्वशम्भुवचनात् रा तत्पर्यायत्वात् श्री'। तथा अज –ब्रह्मा । "अ कृष्ण" इति श्रीअमरवचनात् अ –श्रीकृष्ण । तथा "अ शिवे केशवे वायौ, ब्रह्मचन्द्राग्निभानुषु" इति विश्वशम्भुवचनप्रामाण्यात् अ –शिव । तत अजश्च अश्च अश्च अजा । (रया–) श्रिया उपलक्षिता अजा (राजा –) श्रीअजा –श्रीब्रह्मविष्णुशिवाख्यास्त्रयोऽपि देवा' न –अस्माक, "ई' श्री " इति श्रीअमरकविवचनप्रामाण्यात् ई –श्री तस्या तत्सम्बन्धि वा सौख्य–सुख ईसौख्य ऋद्धिसौख्यमिति यावत् अददत–अदुरित्यर्थ । इद तत्तत्सेवकाना वचनम् ।

अत्र राशब्दो व्यवधानेन श्रीप्रतीतिकृदपि श्लेषचित्रादित्वात् न दोषभाक् । यथा—

"येन ध्वस्तमनोभवेन बलिजित्काय पुराऽस्त्रीकृतो
यश्चोद्वृत्तभुजङ्गहारवलयो गङ्गा च योऽधारयत् ।
यस्याहु शशिमच्छिरो हर इति स्तुत्य च नामामरा
पायात् स स्वयमन्धकक्षयकरस्त्वा सर्वदोमाधव.॥१॥"[3]–शार्दूलविक्रीडितम्

इत्यादि । एवमग्रेऽपि सति प्रयोजनेऽनुसर्तव्यम् ॥ ३ ॥

---

१ 'यो गङ्गा च दधेऽन्धकक्षयकरो यो बर्हिपत्रप्रिय ' इति पाठ सुभाषितरत्नभाण्डागारे ।

२ 'सोऽव्यादिष्टभुजङ्गहारवलयस्त्वा सर्वदोमाधव ' इत्यपि पाठ सुभाषितरत्नभाण्डागारे ।

३ इद कूटकाव्य तस्मादस्य टिप्पणक दीयते, हरपक्षे यथा–स उमाधव –पार्वतीपति त्वा सर्वदा–सदा पायात्–रक्षतु । स किंभूत ? यो गङ्गामधारयत् येन बलिं जितवानिति बलिजित्–विष्णु तस्य काय –शरीर पुरा–त्रिपुरवध काले अस्त्रीकृत –अस्त्रत्वेन सम्पादित । किंभूतेन येन ? 'ध्वस्तमनोभवेन' ध्वस्त –क्षपित मनोभव –रतिपतिर्येन स तेन । पुन किंभूत स ? 'यश्चोद्वृत्त०' हाराश्च वलयानि च हारवलयम्, उद्वृत्ताश्च ते भुजङ्गाश्च उद्वृत्तभुजङ्गा , ते हारवलय यस्य स , उद्वृत्तभुजङ्गा –सर्पा हार –कण्ठाभरण वलय–कटक भुजभूषणमित्यथ । पुन स किंभूत ? यस्य शिर –मस्तक 'शशिमत्' शशी–चन्द्रोऽस्ति यस्मिन् तत् शशिमत् । पुन स किंभूत ? यस्य स्तुत्य–प्रशसनीय नाम–अभिधान अमरा–देवा इति आहु –अकथयन् । इतीति किम् ? हर इति–महादेव इति । पुन स किंभूत ? स्वय–आत्मना अन्धकनामा दैत्य तस्य क्षयकर –अन्तकृत् ।

हरिपक्षे यथा—

येन ध्वस्तमनो भवेन बलिजित्काय पुरा स्त्रीकृतो
यश्चोद्वृत्तभुजङ्गहा रवलयोऽग गा च योऽधारयत् ।
यस्याहु शशिमच्छिरोहर इति स्तुत्य च नामामरा
पायात् स स्वयमन्धकक्षयकरस्त्वा सर्वदो माधव ॥ १ ॥

सर्वं–समस्त ददाति–यच्छतीति सर्वद स माधव –लक्ष्मीपति मा–लक्ष्मी तस्या धव –पति माधव त्वां पायात्–अवतु । स क ? येन भवेनेत्युत्पन्नमात्रेण धृतदेहेनेत्यथ , अन –शकटाकृतिदानव ध्वस्त–भग्नानि, अथवा अकारप्रक्षेप कृत्वा अभवेनेति घोरससारसमुद्रे पूर्वक्रमानुसारेण न विद्यते भवो–जन्म यस्य स तेन कृष्णलीलामृत

सर्वपरिग्रहरहित', यतिरित्यर्थ' । तमाचष्टे–स्तौतीति अजायू । न'–अस्माकं सौख्यं ददते । यलोपादिः पूर्ववत् । अर्थयोजना स्वय कार्या ॥ १६ ॥

## ऋ-आजा नो ददते असौख्यम् ॥ १७ ॥

"ऋर्देवमातरि" इति ( श्रीसुधाकलशमुनीशकृताया एकाक्षरनाममालिकायाः श्लो॰ ६ ) वचनात् ऋ–देवमातर आ–सामस्त्येन अजन्ति–सुरारित्वेन क्षिपन्तीति राजा–दैत्या' । न'–अस्माकं असौख्य ददते । इदं सुराणा वचनम् । अत्र 'इवर्णादेरस्वे स्वरे यवरलम्' ( सिद्ध॰ अ॰ १, पा॰ २, सू॰ २१ ) इति सूत्रेण रत्वे सन्धौ च कृते राजा नो ददते असौख्यमिति रूपसिद्धि' ॥ १७ ॥

## राजा नो ददते सौख्यम् ॥ १८ ॥

"ऋस्त्वजे दानवाञ्छायाम्" इति (सुधा॰ श्लो॰ ७)वचनात् ऋ'–अजो–मेष' तेन वाहनभूतेन अजति–गच्छतीति रज –अग्निदेवता तस्य इमे राजाः–अग्निहोत्रीया ब्राह्मणा॰ न'–अस्माकं सौख्य ददते । अर्थयोजना स्वय कार्या ॥ १८ ॥

## ऋ-आजा नो ददते असौख्यम् ॥ १९ ॥

ऋ –दानवाञ्छा तस्या आज॰–क्षेपो येभ्य' येपा वा ते रत्वे कृते राजा'–कृपणाः नः–अस्माकं असौख्यं ददते–प्रयच्छन्ति, वितरणाभावात् । इद याचकाना वचनम् ॥१९॥

## ऋ-आ-अजा नो ददते असौख्यम् ॥ २०–२१ ॥

"ऋशब्द' पावके सूर्ये धर्मे दाने धने पुमान्" इत्यादि (विश्व॰)वचनात् अर–पावकं–अग्निदेव आ–सामस्त्येन अजन्ति–देवत्वेन गच्छन्तीति रत्वे कृते राजा –अग्निदेव-सेवका नो–न असौख्य ददते । इद अग्निहोत्रीयब्राह्मणवचनम् ॥ २० ॥

एव अर–सूर्य–आदित्यदेव आ–सामस्त्येन अजन्ति–देवत्वेन गच्छन्तीति रत्वे कृते राजा –श्रीसूर्यदेवोपासका नो–न असौख्य ददते । इदमपि तद्विधानामेव वचनम् ॥ २१ ॥

## ऋ-आ-अजा नो ददते सौख्यम् ॥ २२–२४ ॥

अर–धर्म दान धन वा आ–सामस्त्येन अजन्ति–गच्छन्ति प्राप्नुवन्तीति रत्वे कृते राजा –धर्मिष्ठा गुणिन॰ गुणाढ्याश्च पुरुपा न –अस्माक सौख्य–सुख ददते ॥ ३ ॥ इद उत्तमजनवचनम् ॥ २४ ॥

## ऋ-आजा नो ददते सौख्यम् ॥ २५–२७ ॥

ऋशब्दस्य प्रथमैकवचने आ इति रूपम् । तत आ इति धर्मो दानं धनं च तस्य आज –क्षेपो येभ्यो येपा ते । रत्वे कृते राजा नास्तिका दानक्षेपका विरक्ताश्च पुरुपा नो–न सौख्य ददते । इद आस्तिकाना दातॄणा ससाररक्ताना च वचनम् ॥ ३ ॥ २७ ॥

रा अजा नो ददते सौख्यम् ॥ १२ ॥

रा–लक्ष्मी' न'–अस्माक सौख्य ददते । किं० रा ? 'अजा' न जायते इत्यजा, शाश्वतीत्यर्थ । अर्थयोजना स्वय कार्या सुधीभि ॥ १२ ॥

राजा ना उ ददते असो खी अम् ॥ १३ ॥

"एते चतुर्दशापि स्वरा सम्बोधन पादपूरण भर्त्सना मन्त्रण निषेधेषु" इति श्रीवृहव्यासवचनप्रामाण्यात् 'उ' इति सम्बोधने । असौ–प्रत्यक्षो ना–पुमान् अ–परब्रह्म ददते–ददाति । किं० ना ? 'राजा' राजभि –नृपै, आ–शोभा यस्य स राजा, राजभि सेव्यत्वात् । पुन किं० ना ? 'खी' । "खमिन्द्रिये स्वर्गे व्योम्नि नृपे शून्ये सुखे सविदि" इति श्रीअमरकविवचनप्रामाण्यात् ख–सुख ज्ञान वा तद् अस्यास्तीति खी, सुखवान् ज्ञानवान् वा इत्यर्थ ॥ १३ ॥

राजाव् नो ददते सौख्यम् ॥ १४ ॥

रेण–खड्गेण अजा–गलस्तनीं वृश्चति–छेदयतीति राजावृट् त राजावृश्चं आचष्टे–स्तौतीति 'णिज्बहुल नाम्न कृगादिषु' ( सिद्ध० अ० ३, पा० ४, सू० ४२ ) इति णिजि, 'णेरनिटि' ( सिद्ध० अ० ४, पा० ३, सू० ८३ ) इति णिज्लुकि क्विपि तलुकि च राजाव्–अजाहन्तृस्तुत् कोऽपि पापिष्ठमति नो–न सौख्य ददते, हिंसाकारकनरस्तोतृत्वात् । अत्र 'व्यो' ( सिद्ध० अ० १, पा० ३, सू० २३ ) इति सूत्रेण वलोपे राजानो ददते सौख्यमिति रूपसिद्धि । यदाहु श्रीहेमसूरिपादा —व्यो अवर्णात् परयो पदान्तस्थयोर्वयोर्घोषवति परे लुक् स्यात् स च असन्धि । वृक्षवृश्च अव्यय च आचक्षाणो वृक्षव्, अव्यय् वृक्षयाति अव्ययाति । एवमेतत्सूत्रेण अग्रेऽपि सति प्रयोजने वययोर्लोप कर्तव्य ॥ १४ ॥

राजाय् नो ददते सौख्यम् ॥ १५ ॥

रा–रमा–लक्ष्मी जाया–भार्या यस्य स राजाय' श्रीकृष्ण', लक्ष्मीभार्यत्वात्, तं राजाय–कृष्ण आचष्टे–सेवकत्वात् स्तौतीति णिजि तलुकि क्विपि तलुकि च राजाय्–कृष्णस्तोता । न –अस्मभ्यं सौख्य ददते । इद वैष्णववचनम् । अत्रापि 'व्यो' ( सिद्ध० अ० १, पा० ३, सू० २३ ) इति सूत्रेण यलोपे कृते राजा नो ददते सौख्यमिति रूपसिद्धि । एवमग्रेऽपि । शेष पूर्ववत् ॥ १५ ॥

र ! अजाय् नो ददते सौख्यम् ॥ १६ ॥

"रं' स्मरे तीक्ष्णे विश्वानरे शब्दे रामे वज्रे नरे" इति सुधाकलशवचनात् हे र !–हे नर ! । न विद्यते जाया–स्त्री यस्य स अजाय –स्त्रीरहित । उपलक्षणत्वात् स्त्र्यादि-

१ "र कामे तीक्ष्णे वैश्वानरे नरे ॥ ३६ ॥ रामे वज्रे च शब्दे स्यात्" इति सुधाकलशैकाक्षरनाममालिकायाम् ।

## लाजाय् नो ददते सौख्यम् ॥ ३६ ॥

लाजेभ्य'–तन्दुलेभ्य आय–लाभ आचष्टे इति लाजाय् एवविध' कोऽपि जन' नः–अस्माक सौख्यं ददते। णिजादिविधि पूर्ववत्। अर्थयोजना स्वय कार्या ॥ ३६ ॥

## लाव् जा ! नो ददते असौख्यम् ॥ ३७ ॥

"ला च लक्ष्मीर्लमस्वरे" इति विश्वशम्भुवचनात् ला–लक्ष्मीं अवति–स्वामीभवतीति लावो–लक्ष्मीवान्। तमाचष्टे–स्तौतीति णिजि लावयतीति णिज्लुकि क्विपि तल्लुकि च लाव्। "जस्तु जेतरि" इति (विश्वशम्भु)वचनात् हे जा ![1]–जेतृजना ! लाव्–लक्ष्मीस्वामिस्तावक नो–न असौख्य ददते। अर्थयोजना स्वय कार्या। अत्र 'अव रक्षणगतिकान्तिप्रीतितृप्त्यवगम[न]प्रवेशश्रवणस्वाम्यर्थयाचनक्रियेच्छादीप्त्यवाप्त्यालिङ्गनहिंसादानभागवृद्धिषु' इति (पाणिनीयधातुपाठे ६००) उक्तत्वात् अव-धातु स्वाम्यर्थो ग्राह्य'। एवमेव शतार्थिभिर्जयसुन्दरसूरिभिरपि उक्तम्। तथाहि—ज–जन्म यान्ति–प्राप्नुयन्तीति जया–जन्मिनस्तेषु ये वृषभा॰–श्रेष्ठा भव्यत्वात् तेषा अवति–स्वामीभवतीति जयवृषभाव इत्यादि ॥ ३७ ॥

## राजा नो ददते असौख्यम् ॥ ३८ ॥

"ऋ तु कुत्सायाम्" इति सुधाकलश(श्लो॰ ६)वचनात् ऋ इति कुत्सा ता अजन्ति–गच्छन्तीति रत्वे कृते रजा'–कुत्सागामिन पुरुषा तेषामिमे राजा'। एवविधा॰ केचन पुरुषा न –अस्माक असौख्य ददते। इद प्रतिष्ठितजनवचनम् ॥ ३८ ॥

## लाजाव् नो ददते सौख्यम् ॥ ३९ ॥

लाजाना–तन्दुलाना अव अवन–रक्षण करोतीति लाजाव्–तन्दुलरक्षक। अत्र करोत्यर्थे णिज् ज्ञेय। न –अस्माक सौख्यं ददते। अर्थयोजना स्वय कार्या ॥ ३९ ॥

## राजाय् नो ददते सौख्यम् ॥ ४० ॥

रा–रमा–लक्ष्मीस्तस्या जो–जात राज –कामस्त अयति–गच्छतीति राजाय'–कामिजन तमाचष्टे–स्तौतीति णिजादिविधौ राजाय्–कामिजनस्तावक। नो–न सौख्य ददते। इद विरागिणो वचनम् ॥ ४० ॥

## राजाय् नो ददते सौख्यम् ॥ ४१ ॥

राजान–नृप चन्द्र वा अयति–गच्छतीति राजाय तमाचष्टे इति राजाय्। एवविध कोऽपि जनो न –अस्माक सौख्य ददते। अर्थयोजना स्वय कार्या। यलोप पूर्ववत् ॥ ४१ ॥

---

[1] 'जश्च जेतरि' इति सुधा॰ (श्लो॰ १८)।

## राजा आ नो ददते सौख्यम् ॥ २८ ॥

आ–अग्नि[1] न –अस्माक सौख्य ददते । किं० आ? 'राजा' राजते–दीप्यते भूतले इति राजा ॥ २८ ॥

## राजा आ नो ददते सौख्यम् ॥ २९–३१ ॥

आ–धर्मो न –अस्माक सौख्य ददते । किं० आ? 'राजा' रञ्जयति चतुरनरचेतासीति राजा । इद धर्मिष्ठजनवचनम् ॥ २९ ॥

एव आ–दान धन च न –अस्माक सौख्यं ददते । किं० आ? 'राजा' । व्युत्पत्त्यादि पूर्ववत् अर्थद्वयम् ॥ २ ॥ सर्वे ॥ ३१ ॥

## ऋ-आ-अजा नो ददते असौख्यम् ॥ ३२ ॥

ऋ –देवमाता ता आ–सामस्त्येन अजन्ति–मातृत्वेन गच्छन्तीति रत्वे कृते सन्धौ च सति राजा–देवा न –अस्माक असौख्य ददते । इद दैत्याना वचनम् ॥ ३२ ॥

## ऋ-आ-अजा नो ददते असौख्यम् ॥ ३३ ॥

"ऋर्दितौ स्यादजे" इति तिलकानेकार्थवचनात् ऋ –दितिस्ता आ–सामस्त्येन अजन्ति–मातृत्वेन गच्छन्तीति राजा –दैत्या न –अस्माक असौख्य ददते । इद सुराणा वचनम् ॥ ३३ ॥

## ऋ-आ-अजा नो ददते असौख्यम् ॥ ३४ ॥

ऋ'–मेषस्त आ–सामस्त्येन अजन्ति–क्षिपन्तीति रत्वे कृते राजा –सिंहादय न'–अस्माक असौख्य ददते । इद मृगाणा वचनम् ॥ ३४ ॥

## लृ-आ-अजा नो ददते सौख्यम् ॥ ३५ ॥

"ऋं(लृ ?)र्वाराह्याम्" इति तिलकानेकार्थवचनात् ऋ (लृ ?)–वाराहीदेवता तां आ–सामस्त्येन अजन्ति–देवत्वेन गच्छन्तीति लाजा –वाराहीभक्ता पुरुषा न –अस्मभ्य सौख्य ददते । इद तद्विधानामेव वचनम् । अत्र 'इवर्णादेरस्वे स्वरे यवरलम्' ( सिद्ध० अ० १, पा० २, सू० २१ ) इति सूत्रेण लत्व विधेयम् । अत्र चित्रादित्वाद् रलयोरैक्य न दोषाय । यदाह—

"अहमपि परेऽपि कवय–स्तथापि महदन्तर पर ज्ञेयम् ।
ऐक्य रलयोरिति यदि, तत् किं कलभायते करभ ? ॥ १ ॥"

एवमग्रेऽपि सति प्रयोजनेऽनुसर्तव्यम् ॥ ३५ ॥

---

1 "लृर्वाराह्या" इति सुधा० ( श्लो० ७ ) । 2 'करभायते कलभ ' इति सुभाषित० ।

## लाजाय् नो ददते सौख्यम् ॥ ३६ ॥

लाजेभ्य॰–तन्दुलेभ्य आय–लाभ आचष्टे इति लाजाय् एवविध॰ कोऽपि जन॰ नः–असाक सौख्य ददते। णिजादिविधि पूर्ववत्। अर्थयोजना स्वयं कार्या ॥ ३६ ॥

## लाव् जा [1] नो ददते असौख्यम् ॥ ३७ ॥

"ला च लक्ष्मीर्लमम्बरे" इति विश्वशम्भुवचनात् ला–लक्ष्मीं अवति–स्वामीभवतीति लावो–लक्ष्मीवान्। तमाचष्टे–स्तौतीति णिजि लावयतीति णिज्लुकि क्विपि तल्लुकि च लाव्। "जंस्तु जेतरि" इति (विश्वशम्भु)वचनात् हे जा [1]–जेतृ॰जना! लाव्–लक्ष्मीस्वामिस्तावक॰ नो–न असौख्य ददते। अर्थयोजना स्वय कार्या। अत्र 'अव रक्षणगतिकान्तिप्रीतितृप्त्यवगम[न]प्रवेशश्रवणस्वाम्यर्थयाचनक्रियेच्छादीप्त्यवाप्त्यालिङ्गनहिंसादानभागवृद्धिषु' इति (पाणिनीयधातुपाठे ६००) उक्तत्वात् अव॰धातु स्वाम्यर्थो ग्राह्य॰। एवमेव शतार्थिभिर्जयसुन्दरसूरिभिरपि उक्तम्। तथाहि—ज–जन्म यान्ति–प्राप्नुवन्तीति जया–जन्मिनस्तेषु ये वृषभा–श्रेष्ठा भव्यत्वात् तेषा अवति–स्वामीभवतीति जयवृषभाव इत्यादि ॥ ३७ ॥

## राजा नो ददते असौख्यम् ॥ ३८ ॥

"ऋ तु कुत्सायाम्" इति सुधाकलश(श्लो॰ ६)वचनात् ऋ इति कुत्सा तां अजन्ति–गच्छन्तीति रत्वे कृते रजा॰–कुत्सागामिन पुरुषा तेषामिमे राजा॰। एवविधाः केचन पुरुषा न–असाक असौख्य ददते। इद प्रतिष्ठितजनवचनम् ॥ ३८ ॥

## लाजाव् नो ददते सौख्यम् ॥ ३९ ॥

लाजाना–तन्दुलाना अव अवन–रक्षणं करोतीति लाजाव्–तन्दुलरक्षक॰। अत्र करोत्यर्थे णिज् ज्ञेय। न–असाक सौख्य ददते। अर्थयोजना स्वय कार्या ॥ ३९ ॥

## राजाय् नो ददते सौख्यम् ॥ ४० ॥

रा–रमा–लक्ष्मीस्तस्या जो–जात राज–कामस्त अयति–गच्छतीति राजाय–कामिजन तमाचष्टे–स्तौतीति णिजादिविधौ राजाय्–कामिजनस्तावक। नो–न सौख्य ददते। इद विरागिणो वचनम् ॥ ४० ॥

## राजाय् नो ददते सौख्यम् ॥ ४१ ॥

राजान–नृप चन्द्रं वा अयति–गच्छतीति राजाय तमाचष्टे इति राजाय्। एवविध कोऽपि जनो न–असाक सौख्य ददते। अर्थयोजना स्वय कार्या। यलोप पूर्ववत् ॥ ४१ ॥

---

१ 'जश्च जेतरि' इति सुधा॰ (श्लो॰ १८)।

## राजाय् नो ददते सौख्यम् ॥ ४२ ॥

राजवत्–नृपवत् आयो–भाग्य यस्य स राजाय' एवंविध कोऽपि जनः तमाचष्टे–स्तौतीति राजाय् । न'–अस्माक सौख्य ददते । अर्थयोजना तु (यत्र) कृता न भवति तत्र स्वय कार्या । मया तु ग्रन्थगौरवभयान्न लिख्यते ॥ ४२ ॥

## रा जाय् ! नो ददते असौख्यम् ॥ ४३–४४ ॥

जयाना समाहारो जाय–जयसमूह आचष्टे इति जाय्–बन्दिजनादि तत्सम्बोधनं हे जाय् ! "रा॰ कनके विभवे मेघे स्थानके" इति सुधाकलशवचनात् रा –कनकं (१) द्रव्य (२) मेघ (३) आश्रयश्च (४) । नो–न असौख्य ददते । सौख्य ददते इत्यर्थ' । इदं स्वर्णद्रव्यमेघाश्रमा( या?)र्थिना वचनम् ॥ ४ ॥ स्वय बुद्ध्या चत्वारोऽप्यर्था पृथक् पृथक् कार्या॰[2] ॥ ४४ ॥

## राजाव् नो ददते सौख्यम् ॥ ४५ ॥

"र जले रङ्गवेगयो " इति विश्वशम्भुवचनात् रेण–रङ्गेण अजा–गलस्तनीं अवति–रक्षतीति राजाव –अजारक्षाकृत् कोऽपि धर्मिष्ठो जन त आचष्टे इति राजाव् । एवविध कोऽपि न –अस्माक सौख्य ददते । अर्थयोजना स्वय कार्या । वलोपादि पूर्ववत् ज्ञेय, ग्रन्थगौरवभयात् न वारवार सूत्राणि लिख्यन्ते ॥ ४५ ॥

## र ! अजाव् नो ददते सौख्यम् ॥ ४६–५० ॥

अवन्ति–स्वामीभवन्तीति अवा । अजा हर १ हरि २ ब्रह्म ३ रघुज ४ स्मरा ५–ख्या देवा अवा –स्वामिनो येषा ते अजावास्तान् आचष्टे–स्तौतीति अजाव्–हरादिदेवसेवकस्तुत् ५ हे र ! हे नर ! न –अस्माक सौख्य ददते । अर्थयोजना स्वय कार्या । वलोपादि पूर्ववत् । एवमत्र पञ्चाप्यर्था पृथक् पृथक् स्वय कार्या ॥ ५० ॥

## राजाव् नो ददते सौख्यम् ॥ ५१–५६ ॥

राजभ्यो–नृपचन्द्रयक्षेभ्य आ–लक्ष्मीं अवन्ति–गच्छन्ति प्राप्नुवन्तीति राजावा –नृपचन्द्रयक्षसेवका तान् आचष्टे इति राजाव् ॥ ३ ॥ नः–अस्माक सौख्य असौख्य च ददते । अर्थयोजना स्वय कार्या । वलोपादि पूर्ववत् । एवमत्र नृपसेवकस्तावकेन चन्द्रसेवकस्तावकेन यक्षसेवकस्तावकेन च सम सौख्यासौख्यपदद्वय मीलयित्वा षडर्था॰ कार्या ॥ ५६ ॥

---

१ "रा द्रव्ये कनके पुन । आश्रये नीरदे च स्यात्" इति सुधा॰ (श्लो॰ ३७) । २ अत्र 'चत्वारोऽप्यर्था पृथक् पृथक् कार्या ' इति स्पष्टोल्लेखे सत्यपि आदर्शपुस्तकेषु अर्थाङ्कद्वयमेवोपलभ्यते तच्चिन्त्यम् । ३ अर्थान्तरे 'असौख्य' इति सयोजना ।

## राजाव् नो ददते सौख्यम् ॥ [2]५७–६२ ॥

"रा रमा रमणी बाला" इति (विश्व०)वचनाद् रा–रमा–लक्ष्मीः तस्या आजं–क्षेपं–तिरस्कारं अवति–ददातीति राजावः–लक्ष्मीतिरस्कारदाता तं आचष्टे–स्तौतीति राजाव् नः–अस्माकं सौख्यं ददते । एवं असौख्यं च ददते । अर्थयोजना वलोपादि पूर्ववत् ॥ २ ॥ एवमेव रमणीवाचकेन बालावाचकेन च राशब्देन समं आजावशब्देन च समं सौख्यासौख्यपदद्वयं मीलयित्वा अर्थचतुष्टयं कार्यम् । व्युत्पत्त्यादि सर्वं पूर्ववत् । अत्र अवधातुर्दानार्थो ज्ञेयः । तथा चोदाहरणं श्रीजयसुन्दरसूरिकृतार्थे—अ–परब्रह्म तत्र सीदन्तीति असदः–सिद्धाः तेषां आ–लक्ष्मीः नमतासदा तां अवति–ददातीत्येवशीलः नमतासदावी इत्यादि ॥ ६२ ॥

## राजाव् नो ददते सौख्यम् ॥ [3]६४–६७ ॥

रस्य–स्मरस्य आजं–तिरस्कारं अवति–ददातीति राजावः–ईश्वरः तमाचष्टे–स्तौतीति राजाव्–ईश्वरस्तोता नः–अस्माकं सौख्यं ददते । असौख्यं च ददते । इदं तद्विधानामतद्विधानां च वचनम् । वलोपादि पूर्ववत् । एवं वह्निवाचकेन नरवाचकेन च रशब्देन समं आजावशब्दे सौख्यासौख्यपदद्वयं च मीलयित्वा अर्थचतुष्टयं कार्यम् । वलोपादि पूर्ववत् ॥ ६७ ॥

## राजाव् नो ददते सौख्यम् ॥ ६८ ॥

राजा–यमः अर्थात् मरणं तस्माद् अवति–रक्षतीति राजावः–मरणरक्षको भगवद्धर्म इत्यर्थः, तमाचष्टे इति राजाव् नः–अस्माकं सौख्यं ददते । इदं धर्मिष्ठजनवचः । वलोपः पूर्ववत् ॥ ६८ ॥

## राजाव् नो ददते सौख्यम् ॥ ६९–७६ ॥

राज्ञां—चन्द्र–नृप–यक्ष–यमानां आ–शोभां वृश्चन्ति–छेदयन्तीति राजवृश्चो–राहुप्रमुखाः ४ तान् आचष्टे–स्तौतीति राजाव् ४ नः–अस्माकं सौख्यं असौख्यं च ददते । अर्थयोजना वलोपादि पूर्ववत् । अत्र विस्तरान्वेषिणा पृथक् पृथक् अष्टौ अर्थाः कार्याः ॥ ८ ॥ ७६ ॥

## राव् जा ! नो ददते सौख्यम् ॥ ७७–७८ ॥

राव–शब्दं करोतीति राव् एवंविधः कोऽपि शब्दकारकः । हे जाः !–हे जेतृपुरुषाः ! नो–न ददते सौख्यम् । अनिष्टशब्दस्य (जनस्य) वचनमेतत् १ । एवं राव्–शब्दकारकः नो–न ददते असौख्यम् २ । इदमिष्टशब्दस्य जनस्य वचनम् । वलोपादि पूर्ववत् ॥२॥७८॥

---

१ 'असौख्य' इति अर्थान्तरे, अग्रेऽपि प्रस्तावे एवंविधा संयोजना कार्या । २ अत्र षडर्था दरीदृश्यन्ते तथाप्यादर्शपुस्तकेषु अर्थसप्तकसूचकसंज्ञा समस्ति, तद् विचारणीयं विद्वद्भिः । ३ अर्थपदकस्थाने आदर्शपुस्तकेषु तु चत्वारोऽर्था गणिता , तदपि चिन्त्यम् ।

## राजाव् नो ददते सौख्यम् ॥ ७९–८० ॥

रे–अग्नौ अजा —त्रैवार्षिका व्रीहयः तान् अवति–दहतीति राजाव्–यहां त्रिवार्षिक-व्रीहिहोता तमाचष्टे [1] णिजादिविधौ राजाव् न[2]–अस्माक सौख्य ददते । इद याज्ञिक-जनवचनम् । अथवा नो–न सौख्यं ददते । दु ख ददातीत्यर्थ । इदं तद्विरुद्धजनवचनम् । वलोपादि पूर्ववत् ॥ ८० ॥

अथ प्रकारान्तरेण श्रीजैनमतप्रसिद्धान् अर्हत् १ सिद्ध २ आचार्य ३ उपाध्याय-४ साधु ५ रूपान् पञ्चपरमेष्ठिन[2] स्तुवन्नाह—

## राजा अः नो ददते सौख्यम् ॥ ८१ ॥

"अ स्यादर्हति सिद्धे च विष्णावपि" इति वचनात् अ –अर्हन् न –अस्मभ्य सौख्यं ददते । किंविशिष्ट अ ? 'राजा' स्वामी, त्रिजगत्प्रभुरित्यर्थ । इद जैनवचः ॥ ८१ ॥

## राजा नो ददते सौख्यम् ॥ ८२ ॥

रंजन्ति–सिद्धिशिलाया दीप्यन्ते 'क्वचित्' (सिद्ध० अ० ५, पा० १, सू० १७१) डे रा । तथा जायन्ते–पुनरुत्पद्यन्ते ते जा , न जा अजा –जन्ममरणरहिता । अजा –सिद्धा । ततो राश्च ते अजाश्च राजा नः–अस्माक सौख्यं ददते । इद जन्ममरणादिदु खखिन्ननर-वचनम् ॥ ८२ ॥

## राजा आः नो ददते सौखी अम् ॥ ८३ ॥

"आ स्याद् गणधारिणि" इति वचनात् आ –आचार्य न –अस्माकं अ–परब्रह्म ददते । कि० आ ? 'राजा' रञ्जयति अमृतस्राविण्या सन्देहसन्दोहकाननकृपाण्या स्याद्वा-दवाण्या सभामिति राजा । पुन कि० ? 'सौखी' सुखाना ससारविरक्तिरूपाणा समाहार-सौख सदस्यास्तीति सौखी ॥ ८३ ॥

## रा ज ! आन् ! ओ ! अदद ! ते असौख्यम् ! ॥ ८४ ॥

उरिति पदैकदेशे पदसमुदायात् उ –उपाध्याय तत्सम्बोधन हे ओ [3]–हे उपाध्याय ! ते–तव रा–दीप्ति , भवत्विति शेष ! हे ज ! "जस्तु जेतरि" इति (विश्व०)वचनात् हे प्रतिपक्षजेत ! । पुन हे आन् ! आ–सामस्त्येन नो–ज्ञान येभ्यस्तानि आनानि-शा-स्त्राणि, शास्त्रेभ्य एव ज्ञानोत्पादात् अर्थात् द्वादशाङ्गरूपाणि तानि आचष्टे–अर्थत पाठ-यतीति णिजादिविधौ आन् तत्सम्बोधन हे आन् ! । पुन हे अदद ! । अतन्ति–गच्छन्तीति अतः–प्राणिन तेषु तेषा वा न विद्यते दो[4]–बन्ध छेदो वा यस्मादसौ अददः, षड्जीव-

---

१ समीक्ष्यतां द्वादश पृष्ठम् । २ अवलोक्यता पञ्चदश पृष्ठम् । ३ 'नो ज्ञानब धनयोः' इति सुधा० २९ (श्लो० २७) । ४ 'दाने दातरि दा केचिद् विदुर्दो छेदब धयो ' इति सुधा० (श्लो० २५) ।

निकायवत्सलत्वात् तत्सम्बोधनं हे अदद ! । पुन' चित्रादित्वात् विन्दुलोपे हे असौख्य ! आत्-अर्हतः तीर्थङ्करात् सकाशात् सौख्यं-सुख यस्य स' असौख्यस्तत्सम्बोधनं हे असौख्य ! । अत्र राशब्दो दीप्तौ ज्ञेयः । तथाच श्रीजयसुन्दरोदाहरणम्-'तरा तस्य' तस्य-तत्त्वस्य ज्ञानस्य वा रा-दीप्तिम् । तशब्दस्तत्त्वे ज्ञाने चास्ति । राशब्द आकारान्तो दीप्तौ च वर्तते इत्यादि । अत्र ओ इति एकाक्षरत्वेन पदैकदेशोऽपि पदप्रतीतिजनको ज्ञेयः। दृश्यते च इत्थ यथा अप्रशिख इत्यस्य व्याख्याने ।

"[1]अनेन तव पुत्रस्य, प्रसुप्तस्य वनान्तरे ।
शिखामाक्रम्य पादेन, खड्गेन निहत शिरः ॥ १ ॥"

इति । यथा वा "[2]मिच्छा मि दुक्कडं" इत्यस्य व्याख्यायाम्—

"[3]मित्ति मिउमद्दवत्ते, छत्ति य दोसाण छायणे होइ ।
मित्ति य मेराइ(ऍ) ठिओ, दुत्ति दुगुछामि अप्पाणं ॥ १ ॥
कत्ति कड मे पावं, डत्ति य डेवेमि त उवसमेण ।
एसो मिच्छादुक्कड-पयक्खरत्थो समासेण ॥ २ ॥"

-( आवश्यकनिर्युक्तौ गा० ६८६-६८७ )

तथा श्रीआवश्यकवृहद्वृत्तावपि[4] "मित्ति मिउमद्दवत्ते" इत्यादि । एवमनेकग्रन्थ-सवाद' स्वय ज्ञेय' सुधीभि । अक्षराणामपि च वाचकत्वं न चेत् तेषु समुदाये कथं स्यात् सिकतासु तैलवत् इत्यादि ॥ ८४ ॥

## राज अना-उत् ! अदते ! सौख्यम् ॥ ८५ ॥

"न पुनर्वन्धवुद्धयो " इति वचनात् न विद्यते नो-वन्ध कर्मवन्धन यस्या॰ यस्या वा अना-निष्पापा एवविधा उद्-भाषा यस्य स अनोत् । 'विशेषणाद् विशेष्यप्रतीति'रिति साधु , निरवद्यभाषत्वात्, तत्सम्बोधनं हे अनोत् !-हे साधो ! । त्वमिति क्रियाक्षिप्तकर्तृत्वे । राज-दीप्ति प्राप्नुहि । सौख्यं यथा स्यात् तथा, क्रियाविशेषणमेतत् ।

"क्रियाविशेषणस्यापि, सकर्माकर्मधातुषु ।
नपुसकत्वमेकत्वं, कर्मकत्व च युज्यते ॥ १ ॥"

---

१ अस्य का-यस्य प्रत्येकपादप्रारम्भिकाक्षरसयोजनेन अप्रशिखेति निष्पत्ति ।

२ मिथ्या मे दुष्कृतम् ।

३ छाया—

'मि' इति मृदुमार्दवत्वे 'छ' च इति दोषाणा छादने भवति ।
'मि' इति च मर्यादाया स्थित 'दु' इति जुगुप्सामि आत्मानम् ॥ १ ॥
'क' इति कृत मया पाप 'ड' इति च लङ्घयामि तद् उपशमेन ।
एप मिथ्यादुष्कृतपदाक्षरार्थ समासेन ॥ २ ॥

४ हारिभद्रीयवृत्तौ ।

'राज्(जृग्) दीप्तौ' इत्यस्य धातोरुभयपदित्वात् परस्मैपदम् । उदाहरणमपि नैषध-काव्ये (स० १, श्लो० १०)—

"अनल्पदग्धारिपुरानलोज्ज्वलै-र्निजप्रतापैर्वलयं ज्वलद्भुव ।
प्रदक्षिणीकृत्य जयाय सृष्टया, रराज नीराजनया स राजघ ॥ १ ॥"

हे अदते ! "दो दाने पूजने क्षीणे" इत्याद्युक्तत्वात् न दा—न क्षीणा प्रोन्नता तिः—पूजा यस्य सः अदति , तत्सम्बोधन हे अदते ! । इति पञ्चपरमेष्ठिन आश्रित्यार्थो उक्ता ॥ ८५ ॥

अथ पुनरपि प्रकारान्तरेण श्रीआदिदेव १ श्रीशान्तिनाथ २ श्रीनेमिनाथ ३—श्रीपार्श्वनाथ ४ श्रीमहावीराभिध ५ तीर्थङ्करपञ्चकसञ्जातपञ्चतीर्थीमाश्रित्यार्था लिख्यन्ते । तत्र प्रथम श्रीआदिदेववर्णनमाह—

र ! अज ! (अ !) न ! उत् अद ! ते सौख्यम् ॥ ८६ ॥

अजो—ब्रह्मा पङ्क्तिरथन्यायेन नाभिभू । तथा त्वमपि नाभिभू, नाभिनाम नृपजातत्वात्, तत्सम्बोधन हे अज !—हे श्रीआदिदेव ! ते—तव उत्—भाषा अर्थाद् व्याख्यानध्वनि सौख्य सौख्यहेतुरित्यर्थ । हे र ! "र सूर्येऽग्नौ धने कामे" इति विश्वशम्भुवचनात् हे सूर्य !, भव्यजीवराजीवराजीना विकासहेतुत्वात् । पुन हे अ ! "अ स्यादर्हति सिद्धे च" इति वचनात् हे अर्हन् ! । पुन हे न ! "न पुनर्बोधबुद्धयो " इति वचनात् हे बुद्ध !—हे अवगततत्त्व ! । पुन हे अद ! "अ. शिवे केशवे वायौ, ब्रह्मच-न्द्राग्निसानुषु" इति विश्वशम्भुवचनात् अ —ब्रह्मा अग्निर्वा तद्वत् "दो दाने पूजने क्षीणे, दानशौण्डे च पालके । देवे दीप्तौ" इति विश्वशम्भुवचनाद् दो—दीप्तिर्यस्य सोऽद पीतवर्णत्वात् आदिदेवस्य तत्सम्बोधन हे अद ! ॥

नन्वत्र चतुस्त्रिंशदतिशयसङ्ग्राहकातिशयचतुष्टयमध्ये कोऽतिशय केन पदेनोच्यते सूच्यते वा इत्यभिधीयते । उदिति पदेन वचनातिशय सूचित ॥१॥ तथा 'अ' इति पदेन च पूजातिशय । 'अ' इति पदस्य अर्हति चतु षष्टिसुरेन्द्रकृता पूजामिति अर्हन्निति पर्याय-व्युत्पत्ते ॥ २ ॥ तथा नेति पदेन च ज्ञानातिशय ॥३॥ स चापायापगमातिशयमन्तरेण न सम्भवति । अतो ज्ञानातिशयेन अपायापगमातिशयोऽप्याक्षिप्त ॥ ४ ॥ इति अतिशय चतुष्टयमपि अत्रेदं ज्ञेयम् । इति आदिदेववर्णनेन प्रथमोऽर्थ ॥ ८६ ॥

रा-अजा नो ददते असौ खी अम् ॥ ८७ ॥

अज—मेष मेषराशि अटति—गच्छति इति अजा—शान्तिः, मेषराशित्वात् । तत

---

१ सोमसौभाग्येऽपि (स० १, श्लो० ३५)—

"राजन्ति यत्र जिनराजगृहेषु पञ्च-वर्णाचिरत्नमणिरत्नसुतोरणालि ।
एनोजयाद् विजयलक्ष्मिवृतस्य धर्म-भूपस्य मङ्गलकृते किमु सज्जितालि ॥"

२ एतद् विश्वशम्भुवचनम् ।

रा–श्रीः तत्पूर्वकः अजाः श्री(रा)अजा[1]–श्रीशान्तिः असौ–एषः अ–परब्रह्म नः–अस्माकं ददते। किं०? खी–ज्ञानवान्, केवलज्ञानवानित्यर्थः। इति द्वितीयोऽर्थः। सर्वे ॥ ८७ ॥

## र! अज अ! नो अद! दत! इसौख्यम् ॥ ८८ ॥

हे अ!–हे अर्हन्! त्वं इसौख्य–कामसुखं अज–क्षिप, वैराग्यदेशनादानेन दूरीकुरु इत्यर्थः। यतस्त्वं किंभूत? साक्षात् र!–सूर्य! केवलज्ञानेन जगत्प्रकाशकारित्वात्। हे अद! अस्य–कृष्णस्य दः–पूजनं यस्मिन् यस्य वा स अदः, अथवा अवत्–कृष्णवत् दो–दीप्तिर्देहद्युतिर्यस्य स अदः, कृष्णवर्णत्वात् 'विशेषणाद् विशेष्यप्रतीति'रिति न्यायात् श्रीनेमिः तत्सम्बोधनं हे अद!–हे श्रीनेमे!। पुनः हे दत! दैः–देवैः ता–श्रीः–शोभा यस्य स दतः, जघन्यतो देवकोटीसेव्यत्वात्, तत्सम्बोधनं हे दत!। किं० त्वम्?। नो–बुद्धः–अवगततत्त्व। इदं श्रीनेमिप्रभोरग्रे वैराग्यदेशनां शुश्रूषुणा यदुना वचनम्। इति तृतीयोऽर्थः। सर्वे ॥ ८८ ॥

## रा–आजा नो अददत ईसौख्यम् ॥ ८९ ॥

रा–पर्यायेण श्री। "अ शिवे केशवे वायौ" इति विश्वशम्भुवचनाद् अ–वायुं, अजति–क्षिपति धातूनामनेकार्थत्वात् भक्षतीति अचि आजः–सर्पस्तेन आ–शोभा यस्य स आजा। श्री(रा)पूर्वकः आजा श्री(रा)आजा–श्रीपार्श्वनाथ, सर्पलाञ्छनात्। स नः–अस्माकं ईसौख्यं अददत। इति चतुर्थोऽर्थः। सर्वे ॥ ८९ ॥

## रा–ज! अना–उत्–अत् अत ईसौख्यम् ॥ ९० ॥

"रा रमा रमणी बाला" इति वचनात् रा–कन्या तत्पर्यायत्वात् कन्याराशिस्तत्र जो–जातो राजः–श्रीमहावीरः, कन्याराशिजातत्वात्, तत्सं० हे राज!–हे श्रीवीर! त्वं ईसौख्यं अत–गच्छ। किं० (त्वम्)? अना–निरवद्या उत्–भाषा ता अततीति अनोदत्। इति पञ्चमोऽर्थः। इति जैनमतप्रसिद्धपञ्चतीर्थीमाश्रित्यार्था प्रदर्शिताः। जाता सर्वेऽपि ॥ ९० ॥

अथ पुनरपि प्रकारान्तरेण जैनमतप्रसिद्धान् कतिचिज्जिनानाश्रित्यार्थाः प्रदर्श्यन्ते—

## रा आऽजानोऽत्! अद! ते आसौख्यम् ॥ ९१ ॥

आ–ब्रह्माणं अजति–देवत्वेन गच्छति, तं श्रयतीत्यर्थः इति आज तादृशं यदनः–शकटं रोहिणीत्यर्थः। तथाच प्रयोगः—'उदेष्यति शकटं कृत्तिकोदयात्'। शकटे अन इति नाम च स्यात् तदाकारत्वात्। आजत्वं च ब्रह्मसेवकत्वात्। यदुक्तम्—"ब्राह्मी तु रोहिणी" इति (अभि० का० २, श्लो० २३)। ततः आजानः–रोहिणीनक्षत्रं तत् अतति–

1 'असौख्यम्' इति अर्थान्तरे।

तत्र जातत्वेन गच्छतीति आजानोऽत्–श्रीअजितनाथो द्वितीयो जिन', रोहिणीनक्षत्रजातत्वात् । ततः हे आजानोत्! ते–तव रा–शोभा, भवत्विति शेष' । हे अद! अ –अग्निस्तद्वत् दो–दीप्तिर्यस्य सोऽद , पीतवर्णत्वात् अजितस्य । हे आसौख्य! आ–सामस्त्येन सौख्य–सुख यस्मादसौ आसौख्य , तत्स० हे आसौख्य! चित्रत्वादनुस्वारलोपो न दोषाय। तथा अत्र ते आसौख्यम् इत्यत्राकारलोपः । 'एदोत पदान्तेऽस्य लुग्' ( सिद्ध० अ० १, पा० २, सू० २७) इत्यनेन सूत्रेण मतान्तरमाश्रित्य यथा कुमारसम्भवे महाकाव्ये—"वन्धुप्रिया वन्धुजनो [आ]जुहाव ता पार्वतीत्याभिजनोऽऽजुहाव" । महाभारतेऽपि—"कुरवोऽऽत्महित मन्त्रम्" । अन्यत्रापि—"निर्मापितोऽऽमराज्ञा, गोपगिरौ जयति वीरजिन " । एवमनेकश स्थलानि विलोकनीयानि । अथवा हे असौख्य! न विद्यते सौख्य–सासारिकसुख यस्य स. असौख्यस्तत्स० हे असौख्य! इति । द्वितीयजिनवर्णनमाश्रित्यार्थ उक्त. । सर्वे ॥ ९१ ॥

## राजा नो ददते सौख्यम् ॥ ९२ ॥

राजा–चन्द्रस्तेनोपलक्षित अ –अर्हन् राजा–चन्द्रप्रभजिनोऽष्टम , चन्द्रलाञ्छनत्वात् । अथवा राजा–चन्द्रस्तेन लाञ्छनभूतेन आ–शोभा यस्य स राजा–चन्द्रप्रभो न –अस्माक सौख्यं ददते ॥ [२]८ ॥ सर्वे ॥ ९२ ॥

## रा-ज-आन. अददत इ सौख्यम् ॥ ९३ ॥

"रा रमा रमणी बाला" इति वचनात् पङ्क्तिरथन्यायेन रा–रामा ततो ज–जन्म यस्य स राज –श्रीसुविधिः, रामामातृजातत्वात् तस्य आनो–मुखश्वासो राजान । इ इति सम्बोधने । सौख्य–मन सन्तोष अददत, ददौ इत्यर्थ । इद बाल्यावस्थाया खेलनादिसमये रामामात्रादिजनवचनम् ॥ ९ ॥ सर्वे ॥ ९३ ॥

## रा जानो ! ददते सौख्यम् ॥ ९४ ॥

आ–लक्ष्मीस्तत्पर्यायत्वात् या । तत जपूर्वा आ जाआ, जाया इत्यर्थ । ततो जायानाम्नी वासुपूज्यमातेत्यर्थ । तस्या "नु स्तुतौ" इति वचनात् नु –स्तुतिर्यस्मात् स जानु –श्रीवासुपूज्य. । उत्तमपुत्राद्धि मातापित्रो स्तुतिर्लोके भवत्येव । ततस्तत्स० हे जानो !–हे श्रीवासुपूज्य! भवानिति अध्याहारे । सौख्य ददते । कि० भवान्? 'रा' "र जले रङ्गवेगयो " इति (विश्व०)वचनात् र–रङ्ग अटति–गच्छति–प्राप्नोतीति रा ॥ १२ ॥ सर्वे ॥ ९४ ॥

---

१ निर्णयसागरमुद्रणालये मुद्रिते पुस्तके ( स० १, श्लो० २६ ) तु निम्नलिखित पाठ —
"ता पार्वतीत्याभिजनेन नाम्ना बन्धुप्रिया बन्धुजनो जुहाव ।"

२ अष्टमतीर्थङ्करसूचकोऽङ्कोऽयम् ।

## रा-अ-ज-अः नो ददते असौ खी अम् ॥ ९५ ॥

रा–श्री' अ'–विष्णुः, सदृशनामत्वात् श्रेयांसपिता। राजाऽपि विष्णुः, तस्मात् जो–जातोऽज', (रया–) श्रिया उपलक्षितोऽज श्री(रा)अज –श्रीश्रेयासः स चासौ अ.–अर्हन् राजा.–श्रीश्रेयांसतीर्थकृत् । असौ–अय न.–अस्माक अ–परब्रह्म ददते । किं० ? 'खी' खे –सुखे परमानन्दरूपे तिष्ठतीत्येवशील खी ॥ १३ ॥ सर्वे ॥ ९५ ॥

## र-आ-ज-अ' नः! ददते सौख्यम् ॥ ९६ ॥

"रश्च कामे तैक्ष्ण्ये विश्वानरे नरे ॥ रामे वज्रे च शब्दे स्यात्" इति सुधाकलश-(श्लो० ३६–३७)वचनात् रेण–वज्रेण लाञ्छनभूतेन आया –श्रियाः । "जस्तु जेतरि जनने" इति विश्वशम्भुवचनात् जो–जनन यस्य स राज –श्रीधर्मनाथो जिन , वज्रलाञ्छनत्वात् । ततो राजश्चासौ अश्च–अर्हन् राजा । हे न !–हे नर[1] सौख्यं–सुख ददते ॥ १५ ॥ सर्वे ॥ ९६ ॥

## र! अजाः! नोदत्! अतेः सौख्यम् ॥ ९७ ॥

हे र !–हे नर! अजेन–छागेन लाञ्छनभूतेन आ–श्री यस्य स अजा –श्रीकुन्थुनाथ', छागवाहनत्वात् तत्स० हे अजा ! त्व सौख्य अते.–गच्छे । कि० ? 'नोदत् !' नो–न दत् !–क्षयकृत् ! प्राणिनामिति शेष , षड्जीवनिकायवत्सलत्वात् 'तसू [ष्] दसून् उपक्षये' (सिद्ध० धातुपाठे) क्विपि रूपम् । चित्रादित्वात् विसर्गलोपो न दोषाय ॥१७॥ सर्वे ॥९७॥

## रा-ज-अः नो ददते असौख्यम् ॥ ९८ ॥

रा–पङ्क्तिरथन्यायेन पद्मा ततो राया–पद्माया पद्मानाम्न्या मातरि जो–जातो राज' स चासौ अ'–अर्हन् राजा –श्रीमुनिसुव्रततीर्थकृत् असौख्य नो–न ददते ॥ २० ॥ सर्वे ॥ ९८ ॥

अथ पुन' प्रकारान्तरेण विविधानर्थानाह—

## राजा अ. नो ददते सौख्यम् ॥ ९९–१०० ॥

"अ स्यादर्हति सिद्धे च" इति वचनात् अ –सिद्धो न'–अस्माक सौख्य ददते । कि० अ ? 'राजा' राजते–सिद्धिशिलाया दीप्यते इति राजा । इद ससारविरक्तजनवचनम् । एव असौख्य ददते । इद ससारासक्तिरक्तनरवचनम् । शेष सर्व पूर्ववत् । इत्यर्थद्वयम् । सर्वमीलने ॥ १०० ॥

## रा जा नो ददते असौख्यम् ॥ १०१–१०२ ॥

जायते इति जा–पुत्री । 'क्वचित्' (सिद्ध० अ० ५, पा० १, सू० १७१) डप्रत्यये

---

१ 'र कामी तीक्ष्णे वैश्वानरे नरे' इति पाठान्तरम् ।

जा अग्रे 'डुमिग्ट् प्रक्षेपणे' ( सिद्ध० धातुपाठे ) जा मिनोति इति आमाता । ¹"आया मिग' तृप्रत्यय" । 'मिग्मीग'०' ( सिद्ध० अ० ४, पा० २, सू० ८ ) इत्याकार इति न्यासकारकृतव्युत्पत्तिदर्शनात् जा-पुत्री न -अस्माकं असौख्य ददते । यत किं०? 'रा' रं-काम अदति-अतति-गच्छतीति रा, कामाकुला इत्यर्थ । इद कामाकुलत्वेन प्रकटीकृतविकारे पितृणा वचनम् ॥ १ ॥ एव जा-पुत्री नो-न असौख्य ददते, सौख्यं ददते इत्यर्थ । यत किं० जा? 'रा' राजते षोडशशृङ्गाररचितवेषत्वेन सुन्दरदर्शनात् इति रा । इद परहितावगुण्ठितनिजपुत्रीदर्शने जातसुखस्य पितुर्वचनम् ॥ २ ॥ सर्वे ॥ १०२ ॥

## रा अ-जा न ददते सौख्यम् ॥ १०३-१०४ ॥

न विद्यते जा-पुत्री यस्या सा अजा, एवविधा रा-रमणी न -अस्माक सौख्य ददते ॥ १ ॥ एव हे न !-नर! ममेति शेष । असौख्य ददते । इदमनिष्टेष्टपुत्रीदर्शनयो पित्रोर्वचनम् ॥ २ ॥ अन्यथा वा स्वयमर्थयोजना कार्या ॥ २ ॥ १०४ ॥

## रा-जा-आ नो ददते सौख्यम् ॥ १०५-१०६ ॥

"रा रमा रमणी बाला" इति ( विश्व० )वचनात् रा-रमा-लक्ष्मी सा जा-पुत्री यस्य स राज -समुद्र , तज्जनकत्वात् । तस्य आ-शोभा राजा न -अस्माक सौख्य ददते । इद तदधिकारिदेवाना वचनम् ॥ १ ॥ एव राजा-समुद्रशोभा हे न !-हे नर! असौख्य ददते । इद अगस्तेर्वचनम् ॥ २ ॥ सर्वे ॥ १०६ ॥

## रा-जा-अ नो ददते सौख्यम् ॥ १०७-१०८ ॥

रा-बाला-कन्या जा-पुत्री यस्या सा राजा ता अदति-गच्छतीति राजा' एवविध' कोऽपि जन -न -अस्माक सौख्य असौख्य च ददते । अर्थयोजना स्वय कार्या ॥२॥१०८॥

## रा! जा-अन. ददते सौख्यम् ॥ १०९-११० ॥

जा-पुत्री तत्क्रीडार्थं अन -शकट जान । हे रा !-हे नरा । ममेति शेष , सौख्य ददते असौख्य च ददते । इद लघुशकटिकाक्रीडमाननिजपुत्रीप्रेमाप्रेमवतो पुसोर्वचनम् ॥ २ ॥ सर्वे ॥ ११० ॥

## रायू जा-आन ददते सौख्यम् ॥ १११ ॥

जाया -पुत्र्या आनो-मुखश्वासो जान', ममेति शेष , सौख्यं ददते । किं० जान ? 'रायू' रस्य-हर्षस्य आय-प्राप्ति करोतीति रायू । णिजादिविधानेन रूपसिद्धि पूर्ववत् । 'व्यो '( सिद्ध० अ० १, पा० ३, सू० २३ ) इति सूत्रेण यलोपोऽपि पूर्ववत् । इद वल्लभपुत्रीकस्य पितुर्हुलापनसमये वचनम् ॥ १११ ॥

---

१ 'आयासत्र मिग ' इति ख-पाठ ।

## रा अ-जा नो ददते असौख्यम् ॥ ११२ ॥

अस्य–कृष्णस्य जा–पुत्री अजा नो–न ददते असौख्यं, ममेति शेषः । किं० ? 'रा' राजते–शोभते इति रा–शोभमाना । अर्थयोजना स्वय कार्या ॥ ११२ ॥

## रा आ-जा नो ददते सौख्यम् ॥ ११३ ॥

आ–ब्रह्मा तस्य जा–पुत्री आजा–सरस्वती नः–अस्माक सौख्यं ददते । कि० आजा ? 'रा' शोभमाना ॥ ११३ ॥

## राजा अ. नः ददते सौख्यम्* ॥ ११४–११५ ॥

"अः कृष्णः" इति श्रीअमर(कवि)वचनात् अ·–श्रीकृष्णो न·–अस्माकं सौख्यं ददते । किं० ? 'राजा' स्वामी । इदं वैष्णवं वच· ॥ १ ॥ एवं असौख्यं ददते । इदं कालनेमि–हयग्रीव–शकटादिदैत्याना वचनम् ॥ २ ॥ ११५ ॥

## राजा (राऽजा) अ-आ नः ददते सौख्यम्* ॥ ११६–११७ ॥

अस्य–कृष्णस्य आ–शोभा नः–अस्माक सौख्य ददते । किं० ? 'राजा' राजते इति अचि आपि च राजा । सुन्दरेत्यर्थ । अथवा विशेषणद्वय पृथक् रा–शोभमाना । पुन किं० ?। अजा न जायत इत्यजा–शाश्वती, न तु अन्यजनशोभेव कृत्रिमा । इदं यशोदादीना वचनम् ॥ १ ॥ एव असौख्य ददते । शेष सर्व पूर्ववत् । इद कृष्णवैरिणा वचनम् ॥ २ ॥ ११७ ॥

## राजा आ नो ददते सौख्यम्* ॥ ११८–११९ ॥

"आ स्वयम्भू" इति (विश्व० श्लो० ५) वचनात् आ–श्रीब्रह्मा न·–अस्माकं सौख्यं–सुख ददते । कि० आ· ? 'राजा' स्वामी । एव असौख्यं–दु·ख ददते । शेष पूर्ववत् । इद विधिभक्ताभक्तजनवचनम् ॥ ११९ ॥

## राजा आ-आ नो ददते सौख्यम्* ॥ १२०–१२१ ॥

आ–ब्रह्मा तस्य आ–शोभा न·–अस्मभ्य सौख्यं असौख्य (वा) ददते । किं० ? 'राजा' सुन्दरा । शेष पूर्ववत् । अर्थयोजना स्वयं कार्या ॥ १२१ ॥

## राजा अ नो ददते सौख्यम्* ॥ १२२–१३१ ॥

"अ शिवे केशवे वायौ, ब्रह्मचन्द्राग्निभानुपु" इति विश्वशम्भु(श्लो० ५)वचनात् अ–ईश्वर सौख्य असौख्य च ददते । कि० ? 'राजा' शोभमान । शेष पूर्ववत् । इद

---

१ 'ममेति शेष' इत्यधिक क-पाठश्चिन्तनीय, तस्यापि सम्भवश्चेत् सरस्वती नो–न असौख्य ददते इति पाठ ।

* अनेन चिह्नेन सूच्यते यदुत 'असौख्य' इति सयोजना कार्याऽथान्तरे ।

२–३ 'आ न' इति क-पाठश्चिन्तनीय । ४ 'सानुपु' इति प्रत्यन्तरे ।

जा अग्रे 'डुमिंग्ट् प्रक्षेपणे' (सिद्ध० धातुपाठे) जा मिनोति इति जामाता। [1]"आया मिग तृप्रत्यय"। 'मिग्मीग०' (सिद्ध० अ० ४, पा० २, सू० ८) इत्याकार इति न्यासकारकृतव्युत्पत्तिदर्शनात् जा–पुत्री न'–अस्माकं असौख्यं ददते। यत किं०? 'रा' र–काम अद्रति–अतति–गच्छतीति रा, कामाकुला इत्यर्थ। इद कामाकुलत्वेन प्रकटीकृतविकारे पितृणा वचनम् ॥ १ ॥ एव जा–पुत्री नो–न असौख्यं ददते, सौख्य ददते इत्यर्थ। यत्त किं० जा? 'रा' राजते षोडशशृङ्गाररचितवेषत्वेन सुन्दरदर्शनात् इति रा। इद परहितावगुण्ठितनिजपुत्रीदर्शने जातसुखस्य पितुर्वचनम् ॥ २ ॥ सर्वे ॥ १०२ ॥

## रा अ-जा न ददते सौख्यम् ॥ १०३–१०४ ॥

न विद्यते जा–पुत्री यस्या सा अजा, एवविधा रा–रमणी न –अस्माक सौख्य ददते ॥ १ ॥ एव हे न !–नर! ममेति शेष। असौख्य ददते। इदमनिष्टपुत्रीदर्शनयो पित्रोर्वचनम् ॥ २ ॥ अन्यथा वा स्वयमर्थयोजना कार्या ॥ २ ॥ १०४ ॥

## रा-जा-आ नो ददते सौख्यम् ॥ १०५–१०६ ॥

"रा रमा रमणी बाला" इति (विश्व०) वचनात् रा–रमा–लक्ष्मी सा जा–पुत्री यस्य स राज –समुद्र, तज्जनकत्वात्। तस्य आ–शोभा राजा न –अस्माक सौख्य ददते। इद तदधिकारिदेवाना वचनम् ॥ १ ॥ एव राजा–समुद्रशोभा हे न !–हे नर! असौख्य ददते। इद अगस्तेर्वचनम् ॥ २ ॥ सर्वे ॥ १०६ ॥

## रा-जा-अ नो ददते सौख्यम् ॥ १०७–१०८ ॥

रा–बाला–कन्या जा–पुत्री यस्या सा राजा ता अटति–गच्छतीति राजा एवविध' कोऽपि जन,–न –अस्माक सौख्य असौख्य च ददते। अर्थयोजना स्वय कार्या ॥२॥१०८॥

## रा! जा-अन ददते सौख्यम् ॥ १०९–११० ॥

जा–पुत्री तत्क्रीडार्थ अन –शकट जान। हे रा !–हे नरा। ममेति शेष, सौख्य ददते असौख्य च ददते। इद लघुशकटिकाक्रीडमाननिजपुत्रीप्रेमाप्रेमवतो पुसोर्वचनम् ॥ २ ॥ सर्वे ॥ ११० ॥

## रायू जा-आन' ददते सौख्यम् ॥ १११ ॥

जाया –पुत्र्या' आनो–मुखश्वासो जान', ममेति शेष, सौख्य ददते। किं० जान? 'रायू' रस्य–हर्षस्य आय–प्राप्ति करोतीति रायू। णिजादिविधानेन रूपसिद्धि पूर्ववत्। 'व्यो' (सिद्ध० अ० १, पा० ३, सू० २३) इति सूत्रेण यलोपोऽपि पूर्ववत्। इद वल्लभ पुत्रीकस्य पितुर्हुलापनसमये वचनम् ॥ १११ ॥

---

१ 'जायास्तत्र मिग' इति ख–पाठ।

**रा अ-जा नो ददते असौख्यम् ॥ ११२ ॥**

अस्य-कृष्णस्य जा-पुत्री अजा नो-न ददते असौख्यं, ममेति शेषः। कि० ? 'रा' राजते-शोभते इति रा-शोभमाना। अर्थयोजना स्वयं कार्या ॥ ११२ ॥

**रा आ-जा नो ददते सौख्यम् ॥ ११३ ॥**

आ-ब्रह्मा तस्य जा-पुत्री आजा-सरस्वती न-अस्माकं सौख्यं ददते। किं० आजा? 'रा' शोभमाना ॥ ११३ ॥

**राजा अः न. ददते सौख्यम्* ॥ ११४-११५ ॥**

"अ: कृष्णः" इति श्रीअमर(कवि)वचनात् अः-श्रीकृष्णो नः-अस्माकं सौख्यं ददते। किं० ? 'राजा' स्वामी। इदं वैष्णवं वचः ॥ १ ॥ एवं असौख्यं ददते। इदं कालनेमि-हयग्रीव-शकटादिदैत्यानां वचनम् ॥ २ ॥ ११५ ॥

**राजा (राऽजा) अ-आ नः ददते सौख्यम्* ॥ ११६-११७ ॥**

अस्य-कृष्णस्य आ-शोभा नः-अस्माकं सौख्यं ददते। किं० ? 'राजा' राजते इति अचि आपि च राजा। सुन्दरेत्यर्थः। अथवा विशेषणद्वयं पृथक् रा-शोभमाना। पुनः किं० ?। अजा न जायत इत्यजा-शाश्वती, न तु अन्यजनशोभेव कृत्रिमा। इदं यशोदादीनां वचनम् ॥ १ ॥ एवं असौख्यं ददते। शेषं सर्वं पूर्ववत्। इदं कृष्णवैरिणां वचनम् ॥ २ ॥ ११७ ॥

**राजा आ नो ददते सौख्यम्* ॥ ११८-११९ ॥**

"आ स्वयम्भूः" इति (विश्व० श्लो० ५) वचनात् आः-श्रीब्रह्मा नः-अस्माकं सौख्यं-सुखं ददते। किं० आ ? 'राजा' स्वामी। एवं असौख्यं-दुःखं ददते। शेषं पूर्ववत्। इदं विधिभक्ताभक्तजनवचनम् ॥ ११९ ॥

**राजा आ-आ नो ददते सौख्यम्* ॥ १२०-१२१ ॥**

आ-ब्रह्मा तस्य आ-शोभा नः-अस्मभ्यं सौख्यं असौख्यं (वा) ददते। किं० ? 'राजा' सुन्दरा। शेषं पूर्ववत्। अर्थयोजना स्वयं कार्या ॥ १२१ ॥

**राजा अ. नो ददते सौख्यम्* ॥ १२२-१३१ ॥**

"अः शिवे केशवे वायौ, ब्रह्मचन्द्राग्निभानुषु" इति विश्वशम्भु(श्लो० ५)वचनात् अः-ईश्वरः सौख्यं असौख्यं च ददते। किं० ? 'राजा' शोभमानः। शेषं पूर्ववत्। इदं

१ 'ममेति शेषः' इत्यधिकः क-पाठश्चिन्तनीयः, तथापि सम्भवश्चेत् सरस्वती नो-न असौख्यं ददते इति पाठः।

* अनेन चिह्नेन सूच्यते यदुत 'असौख्य' इति संयोजना कार्याऽथान्तरे।

२-३ 'आ न' इति क-पाठश्चिन्तनीयः। ४ 'सानुषु' इति प्रत्यन्तरे।

मारेश्वराणा गजपूपादीना वचनम् ॥ २ ॥ एवं वायु-ब्रह्म-चन्द्रा ऽग्निवाचकेनापि अशब्देन सम द्वौ द्वौ अर्थौ पृथक् पृथक् कार्यौ । जाता अष्टौ ॥ ८ ॥ पूर्वोक्तद्वयमीलने जाताः ॥ १० ॥ सर्वे० ॥ १३१ ॥

## रा-अः जाः । नो ददते असौ खी अम् ॥ १३२–१३६ ॥

रा-श्रीः अ'–कृष्ण' । रया–श्रिया उपलक्षित अः रा.–श्रीकृष्ण । "जस्तु जेतरि" इति वचनात् हे जा !–हे जेतार पुरुषा ! असौ–प्रत्यक्षः अ–परमब्रह्म नो–न ददते! अपि तु ददते इति काक्वा व्याख्येयम् ॥१॥ किं० ? 'खी' ज्ञानवान् सुखवान् वा । एवं अर्हत्१सिद्ध२शिव३वाचकेनापि अशब्देन सम अर्थत्रय कार्यम् । पूर्व(१)मीलने ॥ ४ ॥ सर्वे० ॥ १३५ ॥

एव ब्रह्मवाचकेन अशब्देनापि सम अनयैव रीत्या एकोऽर्थ कार्यं । सर्वे० ॥१३६॥

## र-अजा नो ददते सौख्यम्* ॥ १३७–१३८ ॥

अजन्ति–क्षिपन्तीति अचि अजा'–क्षेपका । रस्य–कन्दर्पस्य अजाः–क्षेपका राजा विशेषणाद् विशेष्यप्रतीतिरिति न्यायात् ईश्वरा' । बहुवचन च ईश्वरस्य बहुत्वख्यापनार्थम् । यदुक्त (महादेवस्तोत्रे श्लो० ३४)—"क्षितिजलपवनहुताशने"त्यादि । न –अस्माक सौख्य असौख्य च ददते । इद तद्भक्ताभक्तजनवचनम् ॥ २ ॥ सर्वे० ॥ १३८ ॥

अथ पुनरपि प्रकारान्तरेण अर्थानाह—

## राजा नो ददते सौख्यम्* ॥ १३९–२०४ ॥

राजा–नृपति न'–असभ्य अस्माकं (वा) सौख्य–सुख ददते । इद सुरक्षितप्रजावचनम् ॥२॥ राजा–नृपतिर्नो–न सौख्य ददते प्रजानामित्युक्तिसामर्थ्याद् गम्यते । इह केनचिद् वैदेशिकेन कीदृगत्र राजेति पृष्ट कोऽपीदमुवाच । अत्र नो प्रतिषेधको ज्ञेय । यद्वाचि एकाक्षर्यां "अमानोना प्रतिषेधे" इति । एवमग्रेऽपि सति प्रयोजने स्मर्तव्यम् ॥३॥ राजानो–नृपा सौख्य ददते, जनानामिति शेष । एवमग्रेऽपि अर्थसामर्थ्यात् स्वेप्सितशेषशेषशब्दाकर्ष' कर्तव्यः । अत्र नामक्रियाबहुवचनकृतोऽर्थभेद' ॥ ४ ॥

शतार्थिकृता शास्त्रादौ अपि क्वचित् क्वचित् नामवचनभेदात् क्वचित् क्वचित् क्रियावचनभेदात् क्वचित् क्वचित् काकुवचनभेदाच्च अर्थभेदो दृश्यते ततोऽत्र बहु(र्थ)करणे को दोष ? । एतत् तु सर्वं अत्रैव ग्रन्थान्ते वक्ष्यते । एवमेते चत्वारोऽप्यर्था. काकुवचनेनापि कार्या । यथा—राजा–नृपति न.–असभ्य सौख्यं ददते? अपि तु न ददते । इत्यादि पूर्वरीत्या कर्तव्या । जाता ॥ ८ ॥

एते पुनरपि अष्टावप्यर्था असौख्यशब्देन सम योज्यन्ते ॥ यथा—राजा–नृपति न –असभ्य असौख्य ददते । इद करनिकरनिपीडितप्रजावचनम् । इत्यादि पूर्व

१ 'एतयैव' इति ग–घ–पाठ ।

घत् कार्या॰ । व्युत्पत्तिरपि पूर्ववत् । अर्थयोजना तु यत्र न कृता भवति तत्र सर्वत्र सुधीभिः स्वयं कार्या । मया विस्तरभयान्न लिख्यते । सर्वे॰ ॥ १६ ॥

एते १६ अर्थाः नृपवाचकराजन्शब्दस्य जाताः । एव चन्द्रवाचिराजन्शब्दस्याप्येते १६ अर्थाः कार्याः । यथा—राजा–चन्द्रो नः–अस्मभ्यं सौख्य ददते । इद सयोगिन्याः स्त्रिया॰ चकोरस्य वा वाक्यम् । इत्यादि पूर्वविधिना ज्ञेया । अर्थयोजना स्वय कार्या । जाता ॥ ३२ ॥

एवं यक्षवाचिराजन्शब्दस्याप्येतेऽर्थाः (१६) कार्या । यथा—राजा–यक्षो न॰–अस्मभ्यं सौख्यं ददते । इदं यक्षभक्तजनवचनम् । इत्यादि पूर्वविधिना कार्याः । जाता॰ ॥ ४८ ॥ अत्र राजन्शब्दो यक्षवाचको ज्ञेय॰ । यदवाचि श्रीकालिदासकविना—

"तस्य स्थित्वा कथमपि पुर॰ [1]केतकाधीनहेतो-
रन्तर्वाष्पश्चिरमनुचरो राजराजस्य दध्यौ ।
मेघालोके भवति सुखिनोऽप्यन्यथावृत्ति चेत
कण्ठाश्लेषप्रणयिनि जने किं पुनर्दूरसस्थे ? ॥ १ ॥"
—मेघदूते ( पू॰ श्लो॰ ३ )

इति । अर्था ॥ ४८ ॥

एवं यमवाचिराजन्शब्दस्याप्येतेऽर्था॰ कार्या॰ । यथा—राजा–यमो नः–अस्मभ्य सौख्य ददते । इद यमभक्तसेवकवचनं कविसमयमाश्रित्य । अथवा मरणसमये अतिदु॰खिजनवचनं इत्यादि पूर्वविधिना ज्ञेया । अर्थयोजना स्वय कार्या । जाता॰ ॥६४॥ पूर्वोक्त–३८ (?) मीलने जाता॰ ॥ १०४ ॥ अर्था । सर्वमीलने च जाताः ॥ २०४ ॥

## राजा अनः ददते सौख्यम्* ॥ २०५–२२० ॥

राजा–नृपति॰ सौख्यं ददते । कि॰ राजा ? 'अन' "नः पुनर्बन्धबुद्धयोः" इति वचनात् न विद्यते बन्धो–बन्धनं यस्मात् यस्य यस्मिन् वा सोऽन ॥ १ ॥ इदं धर्मिष्ठजनवचनम् । एव राजा–नृपोऽसौख्य ददते । कि॰ राजा ? 'अन' बन्धनरहित॰ । व्युत्पत्त्यादि पूर्ववत् । इद पापिष्ठवचनम् ॥ २ ॥ राजा–नृप सौख्य ददते, ममेति शेषः । कि॰ ? 'अन॰' नो–बुद्ध न न॰ अन॰ मूर्ख इति यावत् । इति मूर्खवचनम् । यतो हि सदृशा॰ सदृशै॰ सम राजन्ते । यदुक्तम्—

"[2]हसा रज्जति सरे, भमरा रज्जन्ति केतकीकुसुमे ।
चन्दणवणे भुअगा, सरिसा सरिसेण रज्जति ॥ १ ॥"

इत्यादि ॥ ३ ॥

---

१ 'केतकाधानहेतो', 'केतकाधानहेतो' इति वा पाठ ।

२ छाया—

हसा रज्यन्ति सरसि भ्रमरा रज्यन्ति केतकीकुसुमे ।
चन्दनवने भुजङ्गा सदृशा सदृशेन रज्यन्ति ॥

राजा–नृपः असौख्यं ददते । किं० ? 'अनः' मूर्खः । इदं पण्डितस्य राजसेवकस्य वचनम् । यतो हि मूर्खो राजा दुःखेन आराध्यते । यदुक्तम् (श्रीभर्तृहरिमहर्षिभिः)—

"शक्यो वारयितुं जलेन हुतभुक् छत्रेण सूर्यातपो
नागेन्द्रो निशिताङ्कुशेन समदो दण्डेन गोगर्दभौ ।
व्याधिर्भेषजसङ्ग्रहेण विविधैर्मन्त्रैः प्रयोगैर्विषं
सर्वस्यौषधमस्ति शास्त्रविहितं मूर्खस्य नास्त्यौषधम् ॥ १ ॥"

–(नीतिशतके श्लो० १०)

इत्यादि ॥४॥ राजा–नृपः सौख्यं ददते । ममेति शेषः । किंविशिष्टो राजा ? । 'अनः' न विद्यन्ते नाः –नराः –अर्थान्निजनिकटवर्तिसेवका यस्य सोऽनः, एतकृते एकाकी इत्यर्थः । इदमन्यजनलज्जमाननवोढावचनम् । अत्र नशब्दो नरवाचकः । यदुक्तमेकाक्षर्यां (श्लो० ७६) विश्वशम्भुना–"नो नरे च सनार्थे(थे) च नोऽनर्थेऽपि प्रदर्शते(र्शने)" इति । इदमग्रेऽपि सर्वत्रानुसरणीयम् ॥५॥ राजा–नृपोऽसौख्यं ददते । प्रजानामिति शेषः । किं० राजा ? 'अनः' नररहितः, एकाकीत्यर्थः । एकाकी हि राजा विपक्षान् निराकृत्य प्रजासुखदाने न समर्थो भवेदित्यर्थयोजना । इदं विपक्षलक्षपीड्यमानवचनम् ॥६॥ राजा–नृपः सौख्यं ददते । किं० राजा ? । 'अनः' न विद्यते नः –अनर्थो यस्मात् यस्य यस्मिन् वाऽसौ अनः । इदं नीतिवाक्यम् ॥ ७ ॥ राजा–नृपः असौख्यं ददते । किं० राजा ? 'अनः' अनर्थरहितः । इदमनर्थप्रियजनवचनम् ॥ ८ ॥ एते अष्टावप्यर्था[1] काकुवचनेनापि समं कार्याः । यथा राजा सौख्यं ददते ? अपि तु न ददते । किं० ? 'अनः' बन्धरहितः । इत्यादिप्रकारेण पूर्ववत् कार्याः । अर्थयोजनाऽपि स्वयं कार्या सर्वत्र । जाताः ॥ १६ ॥ पूर्वोक्त २०४ मीलने च जाताः सर्वेऽपि ॥ २२० ॥

## राजाऽऽनः ददते सौख्यम्* ॥ २२१–२२४ ॥

राज्ञः राज्ञो वा आनः–मुखश्वासः सौख्यं ददते । इदं सम्भोगसमये रामावचनम् ॥ १ ॥ राजानो–राजमुखश्वासोऽसौख्यं ददते । इदं रतसमये रुष्टरामावचनम् ॥ २ ॥ राज्ञः राज्ञो वा आनः –प्राणो राजानः सौख्यं १ असौख्यं २ ददते । इत्यादिप्रकारेण अर्थद्वयं कार्यम् । अर्थयोजना स्वयं कार्या । जाताः ॥ ४ ॥ पूर्वोक्तसर्वमीलने जाताः ॥ २२४ ॥

## राज–आ–नः ददते अः सौखी अम् ॥ २२५–२२८ ॥

"अः स्यादर्हति सिद्धे च" इति वचनात् अः –श्रीअर्हन्–जिनः अम्–परब्रह्म ददते । जिनभक्तिभाजामित्यर्थः (ति शेषः ?) । किं० अः ? 'राजानः' राजते इति अचि राजः, एवं(विधः) आ इति अतिशयितं नः–ज्ञानं यस्य स राजानः । पुनः किं० ? 'सौखी' सुखानां–परमानन्दरूपाणां समाहारः सौखं, तदस्यास्तीति सौखी । परमानन्दमय इत्यर्थः ॥ १ ॥ एवं

---

1 'अष्टाऽप्यर्थाः' इति ग–घ–पाठः ।

श्रीविवेकसागरविरचितः

# ॥ हरिशब्दार्थगर्भितः श्रीवीतरागस्तवः ॥

इन्द्रे-भा-ऽश्व-शुक-प्लवा-ऽहि-पवन स्वर्णा-शुं लोकान्तरे-
भारि-ब्रध्नं कपी न्दु-पीतं-गरुड-श्री शुक्र-विष्णव-ऽर्कजैः ।
सूत-स्कन्द-शनी-श वंश-वरुण प्राणा-ऽग्नि भीता ऽसितै-
रथैस्त्वा हरिजैः क्रमाज्जिनपते ! त्रिशन्मितैः स्तौम्यहम् ॥ १ ॥-शार्दूल०

भज भक्तिविनम्रनरेशहरिं १ भज कर्ममहीरुहभङ्गहरिम् २ ।
भज सिद्धिपुरीपथपान्थहरिं ३ भज योगिमन सहकारहरिम् ४ ॥ २ ॥-*पादाकुलकम्
भज वाणिफणिहृ(क्ष)तवादिहरिं ५ भज भीमभवानिलहानिहरिम् ६ ।
भज पापरजव्रजनाशहरिं ७ भज सौवशरीररुगस्तहरिम् ८ ॥ ३ ॥
भज शोकतटाकतपोऽर्कहरिं ९ भज चिद्धिदिताङ्घ्रिसमस्तहरिम् १० ॥
भज दर्पमतङ्गजराजिहरिं ११ भज पारगत तिमिरौघहरिम् १२ ॥ ४ ॥
भज यन्त्रितपञ्चहृषीकहरिं १३ भज वादिकदम्बककोकहरिम् १४ ॥
भज चम्पकसूनविशेषहरिं १५ भज मारसरीसृपजग्धिहरिम् १६ ॥ ५ ॥
भज दत्तनमज्जननैकहरिं १७ भज लोकदनूद्भवशास्तिहरिम् १८ ॥
भज त नरकक्षयकारहरिं १९ भज रूपरमापरिभूतहरिम् २० ॥ ६ ॥
भज केवलकाञ्चनसिद्धिहरिं २१ भज हासहिमप्रभशीलहरिम् २२ ।
भज सौख्यविधातृतृतीयहरिं २३ भज मोहविपाभ्यवहारहरिम् २४ ॥ ७ ॥
भज जन्मपवित्रितहारिहरिं २५ भज सयमनीरधिवासहरिम् २६ ।
भज रक्षितसर्वजनौघहरिं २७ भज कर्मसमिद्दहनैकहरिम् २८ ॥ ८ ॥
भज दुस्तरससृतिसङ्गहरिं २९ भज नेत्रविकारविनाशहरिम् ३० ।
भज शारदचन्द्रसमानयशोघनसारसुगन्धितभूवलयम् ॥ ९ ॥
जिनवर ! परमार्हतस्तवस्ते व्यरचि मया गुरुसोमसुन्दरास्य (?) ।
प्रवितर सुविशालराजराजद्गुण मम वर्यविवेकसागर त्वम् ॥ १० ॥

* * * *

१ भेक । २ रविप्रवृत्तिकर । ३ भवान्तरम् । ४ सूय । ५ पीतवण । ६ स्वर्वैद्यौ अश्विनीकुमारकौ । ७ पारद । ८ स्वामिकार्तिकेय । ९ वागेव फणिन -सपास्तैगमिता वादिन एव हरयो-भेका येन । १० अकारान्तोऽपि वर्तते शब्दोऽयम् । ११ इन्द्रियम् । १२ दैत्य । १३ तृतीय शनि सुखकारकोऽस्ति इति रत्नमालायाम् ।

* वृत्तरत्नाकरेऽस्य लक्षणमेवम्—मात्रासमक नवमाल्गन्तम्, उपचित्रा नवमे परयुक्ते, अष्टाभ्यो भाद् गावुपचित्रा जान्लावथान्तुर्योविश्लोक, तद्युगलाद् वानवासिका स्याद्, वाणाष्टनवसु यदि लश्चित्रा । यदतीतकृतविविधलक्ष्मयुतैर्मात्रासमादिपादै कलितम् अनियतवृत्तपरिमाणसहित प्रथित जगत्सु 'पादाकुलकम्' ॥

# ॥ श्रीऋषभजिनस्तुतिः ॥

## कामक्रीडाच्छन्दोनिबद्धा सारङ्गशब्दार्थसङ्कलिता च ।

(सावचूरिः ।)

श्रीनाभेय योगिध्येय देहज्योति सारङ्ग (१)
सर्वश्रेय श्रेय पद्यागत्यामाद्यत्सारङ्गम् (२) ।
कर्मक्षोणीजन्मश्रोणीश्रेणीध्वसे सारङ्ग (३)
नौम्युत्कण्ठाव्याप्तस्वान्त सौवस्थाम्ना सारङ्गम् (४) ॥ १ ॥

अर्हद्वृन्द क्लृप्तानन्द चञ्चच्चक्षु सारङ्ग (५)
विश्वासत्यव्याधादित्यच्छायाभेदं सारङ्ग (६) ।
क्षामाक्षेम दक्षक्षोणीकौमुद्यामुत्सारङ्ग (७)
श्रेयोरत्या कण्ठाश्लेपे स्तोष्ये नन्दत् सारङ्गम् (८) ॥ २ ॥

स्तौम्यध्वान्त ध्वस्तध्वान्त श्रीसिद्धान्त सारङ्ग (९)
भव्याम्भोजेष्वाविर्भूतानन्दाम्भोरुट्सारङ्गम् (१०) ।
अज्ञानालीपायोदालीशत्या(?) दृप्यत्सारङ्ग (११)
वन्दारूणा भीदारूणा वंक्षोवृक्षे सारङ्गम् (१२) ॥ ३ ॥

---

१ श्रीनाभिराजसुतम् । २ साधुध्यानगम्यम् । ३ शरीरकान्तिस्तया सुवर्णोपमम् । ४ सकलकल्याणसमीचीनमार्गगमनविषये बलवत्सारङ्गमिव सारङ्गम्–अश्वम् । ५ कर्माणि अष्टौ तान्येव क्षोणी–पृथिवी जन्तो –जन्मवतो या श्रोणिर्गुह्याकारा तद्ध्वसने सारङ्ग–हस्तिनम् । ६ अह उत्कण्ठाव्याप्तस्वान्त –हर्षपूरितमना श्रीनाभेय जिनम् । ७ स्वकीयबलेन सारङ्ग–सिंहम् । ८ अह अर्हद्वृन्द स्तोष्ये–स्तवीमि । कीदृशम् अर्हद्वृन्द–जिनसमूह ? क्लृप्तानन्द–सम्पादितहर्षं रचितप्रमोदम् । ९ देदीप्यमाननयनाभ्या मृगम् । १० सर्वमृषावादपर्वकालीनसूर्यप्रभाभेदने सारङ्गमिव सारङ्ग–राहुतुल्यम् । ११ कृशीभूतदुरितम् । १२ दक्षाः–प्रवीणास्त एव क्षोणीकौमुद्य –पृथ्वीचन्द्रज्योत्स्नास्तासा मुद –हर्षास्तेषा सम्पादने सारङ्गमिव सारङ्ग–चन्द्रम् । १३ माङ्गल्यरत्या –कल्याणकामस्त्रिया आलिङ्गने नन्दत्–माद्यत् सारङ्गमिव सारङ्ग–कन्दर्पम् । १४ नुवीमि अध्वान्त–प्रकाशरूप सिद्धान्त स्तौमि सारङ्ग–सूर्यम् । १५ भव्यकमलेषु प्रकटीभूतप्रमोदजलरुहपालीषु सारङ्ग–हसम् । १६ अज्ञानसमूहजलधरश्रेणीहरणविषये दृप्यत्–माद्यत् सारङ्ग–वायुम । १७ अभिवन्दितणाम् । १८ भयकाष्टानाम । १९ पञ्जग्वृक्षे सारङ्ग–शुकसदृशम् ।

जैनाध्यक्षं दक्षं यक्ष सुष्ठुच्छायासारङ्ग (१३)
[2]सौव्या[3] वाण्या गाम्भीर्येण [4]ध्वस्तोद्गर्जितसारङ्गम् (१४)।
[5]अर्हत्सपर्द्वाक्योद्गर्जत्पर्जन्याम्भ सारङ्ग (१५)
वन्दे [6]व्रीडाकामक्रीडाकासारश्रीसारङ्गम् (१६) ॥ ४ ॥
इति श्रीऋषभजिनस्तुति [7]कामक्रीडाऽऽख्या।

* * * *

श्रीगुणविजयगणिगुम्फितः

# ॥ श्रीमहावीरजिनस्तवः ॥

( सारङ्गशब्दार्थमयः )

चन्द्राऽऽदित्य मराल दन्ति पवनै सिंह क्ष्माभृद् घनै·
वीणा कम्बु रमासमुद्भव रसा-कर्पूर-शर्वा दकै· ।
लक्ष्मीकान्त कुठार खड्ग-कुसुमैर्दीपा ऽऽपगा कार्मुकै-
निर्ग्रन्था-ऽलि पयोरुहा-ऽगुरु-पिकैर्वह्न्य-ऽश्वै-कार्तस्वरैः ॥१॥-शार्दूल०
रमण चित्रक-लोचनै कज्जलैर्वदनै चित्र भुजङ्गम चन्दनैः ।
कुल सुवास-महोदधिनन्दिनी-प्रमदसप्रमदैर्वनिविश्रुतै· ॥ २ ॥-द्रुत०
श्यामा-भेक-रथाङ्ग रल-गरुडे कीर-प्लवङ्गो ज्वल-
न्मेद्गद्वर्णनभोऽम्बुपे सुफलवद्वाक् सारिका खञ्जनै· ।
वेणी राग कुरङ्ग कुक्कुट लसद्वंशस्फुरद्वाहनै
रर्थैर्वीरविभु नभोरस(६०)मितै सारङ्गजै सस्तुवे ॥ ३ ॥-शार्दूल०
भविककुमुदवोधनसारङ्ग कोविदकोकनयनसारङ्गम् ।
सुकृतसरोवरतटसारङ्ग दुष्कृततरुभञ्जनसारङ्गम् ॥ ४ ॥-पादाकुलकम्
कुनयरजोहरणे सारङ्ग कितवकरटिदारणसारङ्गम् ।
निश्चलतानिर्जितसारङ्ग कुगतिदहनतर्जनसारङ्गम् ॥ ५ ॥
सुस्वरतातर्जितसारङ्ग चारुनिरञ्जनतासारङ्गम् ।
सुन्दररूपविजितसारङ्ग सर्वसहनगुणतासारङ्गम् ॥ ६ ॥

---

१ अह जैनाधिष्ठायक दक्ष–प्रवीण यक्ष शोभनकान्त्या प्रवालसदृशम् । २ स्वकीयया वाचा । ३ गम्भीरत्वेन । ४ निराकृतगर्जायमानमेघमदृशम् । ५ जितविस्तारिवचनरूपगर्जारवयुक्त-जलधरजलपाने सारङ्ग–चातकम् । ६ लज्जायुतकामकेलितडागलक्ष्मीशोभाकारि सारङ्ग–कमलम् । ७ सर्वगुर्वक्षरमय कामक्रीडाख्य पञ्चदशवर्णात्मक छन्द ('एकन्यूनौ विद्युन्मालापादौ चेल्लीलाखेल,' इति लक्षणात्मक लीलाखेलापरनामकम्) ।

श्वासपराजितवरसारङ्ग दुमदविधिवदने मारङ्गम् ।
दुरितमलापनयनसारङ्ग मन्मथभस्मकरणसारङ्गम् ॥ ७ ॥
सुमतिलतालवने सारङ्ग करपङ्कजसमतासारङ्गम् ।
समवसरणसंश्रितसारङ्ग त्रिभुवनभवनसुभगसारङ्गम् ॥ ८ ॥
निर्मलतागङ्गासारङ्ग भ्रूमञ्जुलताजितसारङ्गम् ।
शमरसरत्नाकरसारङ्ग सज्जनमनपङ्कजसारङ्गम् ॥ ९ ॥
अद्भुतपरिमलसुखसारङ्ग देवसमुद्राहितसारङ्गम् ।
कण्ठचमत्कृतकलसारङ्ग दुर्नयविततगहनसारङ्गम् ॥ १० ॥
दमितकरणचञ्चलसारङ्ग मुक्तरजतमणिगणसारङ्गम् ।
निर्वृतिमृगनयनसारङ्ग कुमतकुरङ्गहननसारङ्गम् ॥ ११ ॥
त्रिभुवनवर्तिसुजनसारङ्ग सिद्धिवधूलोचनसारङ्गम् ।
शशिसोदरसुन्दरसारङ्ग सौवरमादर्शितसारङ्गम् ॥ १२ ॥
कीलितकोपविषमसारङ्ग वाणीशीतलतासारङ्गम् ।
पावितनिजनिरुपमसारङ्ग मृगमदजैत्रवदनसारङ्गम् ॥ १३ ॥
निजवशनिर्मितमतिसारङ्ग सुरपतिभिर्विनुत सारङ्गम् ।
विदलितमोहविपुलसारङ्ग देवीकृतवापीसारङ्गम् ॥ १४ ॥
गगनचलितगुरुवृषसारङ्ग ज्ञातकुले निर्जरसारङ्गम् ।
रोषभुजङ्गदमनसारङ्ग ज्ञानमहाभूरुहसारङ्गम् ॥ १५ ॥
स्वीयवशीकृतमनसारङ्ग लेश्यागुणगालितसारङ्गम् ।
दानावर्जितभविसारङ्ग निगदितनियतनिपुणसारङ्गम् ॥ १६ ॥
केलिकृते रक्षितसारङ्ग जनरञ्जनलोचनसारङ्गम् ।
लुञ्चितभुजगसदृशसारङ्ग धर्मकथालापितसारङ्गम् ॥ १७ ॥
अङ्गरजोमृगमदसारङ्ग मोहरजनिबोधनसारङ्गम् ।
स्वरमाधुर्यमथितसारङ्ग वीर भजत सुकृतसारङ्गम् ॥ १८ ॥
इत्थ वीरजिन स्तुतो नवनवै सारङ्गशब्दोद्भवै
– सद्भावै सनय गुंणादिविजयेनानन्दरोमोद्गमम् ।
हर्षोत्कर्षवशेन पेशलतरैर्भावै सुरैः सन्नत-
श्चित्तप्रीतिकर पर पदमय दद्यान्मुदा देहिनाम् ॥ १९ ॥–शार्दूल०

* * * *

१–२ मनस स्थाने 'मन'प्रयोगश्चिन्तनीय । ३ 'गुणविजयेन' इत्यर्थ ।

पण्डितश्रीलक्ष्मीकल्लोलगणिकृतं

परागशब्दाष्टोत्तरशतार्थनिबद्धं

# ॥ साधारणजिनस्तवनम् ॥

श्रीदेवेन्द्रनरेन्द्रमौलिमुकुटोद्घृष्टाघ्रियुग्म जिनं
नत्वाऽकुमि 'पराग'शब्दविविधार्थोत्पत्तिमाला च याम् ।
पाप पिण्ढि तदीयपुण्यवशतो यन्नामकीर्न विभो !–
ऽभिध्यातीतफलापवर्जनसुधाविष्वाणकारस्कर ॥ १ ॥–शार्दूल०
वक्त्राब्जवायुजितपद्मपरागपूर
हृन्मन्दिरस्थखपरागहतप्रचारम् ।
प्रोद्दीप्तकाञ्चनपरागसवर्णवर्णं
त्वज्जापरागरसिक स्तुतिमानये त्वाम् ॥ २ ॥–वसन्त०
देवाऽपराग ! निकृतिप्रततिप्रतान-
च्छेदे कुठार ! सुपरागसमाङ्गगङ्गम् ।
त्वा सश्रयाम्यनिमिषाधिपचापराग–
ससारमुक्त ! भुवि विस्तृतसम्पराग ! ॥ ३ ॥–,,
स्वामिन् ! जय त्वमनिश सपरम्पराऽऽग–
मादिप्रकाशक ! चिर गतपापराग ! ।
यश्चाप्युवक्थ ऋषिराजिषु पुष्पराग-
वृत्ति विघट्टितमणीवकचापराग ! ॥ ४ ॥–,,
पूर्वापरस्वरविपर्ययत पराग !
तत्त्वाववोधमिहिरोद्गमने पराऽग ! ।
त्व कि परागमयसे मयि मुक्तिदाने
कृपापरागसि जितारिरथ प्रसीद ॥ ५ ॥–,,
तृष्णापरागविरत निरत क्रियाया
लीलापरागतिचरन्तमघ हरन्तम् ।
विश्वाऽपरागपतिशुद्धयशोऽभिराम
वन्दे प्रियवद ! पैरागणनीयशीलम् ॥ ६ ॥–,,

---

१ पर –उत्कृष्ट अग –गिरि, मेरुरित्यथ । २ व्यपगतराग ! । ३ 'पारग !' इत्यथ । ४ पौरगणनीयमाहात्म्यम् ।

भूवा॰ परागपुरुषेषु कृपा दधानो
मायापरागजनितावधवैनतेय ।
यः कोपरागरहितस्त्वमसीन ! तेन
सेवे भवन्तमपरागमशीलवज्रम् ॥ ७ ॥–वसन्त॰

ध्वस्तोपरागपरभागविभूषिताङ्ग
सूरापरागमसमीकृतकर्मधर्मम् ।
पुण्यापरागजनदत्तभन भजेय
देवाऽपरागणितलक्षणसञ्चय त्वाम् ॥ ८ ॥–,,

सेवाऽपरागणितसौख्यकर श्रयामि
हृत्तापरागहरण करण गुणानाम् ।
प्रोद्यत्परागतिगत शरण जनाना
मिष्टार्थसाधनसुपर्वपरागकल्पम् ॥ ९ ॥–,,

तेजोविराजितपराङ्गसमीपराग-
द्वेषच्छिद धनहयद्विपरागहीनम् ।
गेमे(ये) सति द्रुतपराग ! नमस्करोमि
गेस्थे(ये?) जयेऽकलितपापपरागमाशु ॥ १० ॥–,,

गेस्थेजिते जननमृत्युजरापराग
मा देहि तच्छिवपद विलसत्परागम् ।
राज्ञेहतस्मरपरागपकोपराग
रिक्त परागणधरस्थितिकार्यकारिन् ! ॥ ११ ॥–,,

पस्था(?)ङ्गदेवकृतचन्दनसत्परागो
यो द्वापरागमगिरोऽस्ति न जङ्गपूक ।
गेय विधाय कृतदुष्कृतसम्पराग
मीडे प्रतीतमपरागमभिख्यया तम् ॥ १२ ॥–,,

गेपाग्रगे जितपुनर्भवभापराग-
रास्थानके तमुदिते भुवने पराग ! ।
गेशे कृते निहतमोहमहापराग !
गेस्थे पणे कुरु सुख शमधीपराग ! ॥ १३ ॥–,,

१ अपरदार्शनिकसिद्धान्तपर्वतभेदने वज्रमिव वज्रम् । २ मोक्षगतिप्राप्तम् । ३ कल्पवृक्षतुल्यम् ।

गेऽर्थेपरागकरणोद्यमिन नमामि
गेसो स्थिते खलपरागभयप्रमुक्तम् ।
गेन्नेकृतेऽर्पितपरागधराधव ! त्वा
पेहे स्थिते शुचिपरागपवित्रकीर्तिम् ॥ १४ ॥–वसन्त०

गेस्थे भवे सकलजन्तुकृतापराग !
गेदे निवर्हितकपायमहत्पराग ! ।
गेशे विधेहि सुखमुज्झितदुष्पराग !
गेवे सति त्रिजगदङ्गिकृपापराग ! ॥ १५ ॥–,,

पेसौपरागसमधैर्य ! सुवर्यवीर्य !
पेसे परागशिवभीरुमभिष्टुवे त्वाम् ।
ये नीकृते धनवधूप्रभुतापराग-
रान्नोदिते शुचिपरागरदालिकान्ते ! ॥ १६ ॥–,,

रित्रा कृतेनुचितदेहपरागलेप–
रित्रा गते जय परागभवाधिकश्री. ।
उन्नेति र सुविहिते जनतापराग-
गेघे कृते गलितमोहमदापराग ! ॥ १७ ॥–,,

परागनायास्तु पवे पराग, सङ्गेन मुक्त मनसा नतोऽस्मि ।
पेवे कृते देव नमत्पराग!, सत्यक्तरक्तास्थिपराङ्गसङ्ग! ॥ १८ ॥–उपजाति

प्रासापरागाधभवाब्धितीर, वन्दे पराऽगारविमुक्तचिन्तम् ।
तृष्णापरागर्वरुपा निपूदन, वशापरागार्हगुणोपपन्नम् ॥ १९ ॥–,,

दिव्यापरागर्जनतामतीत, सेवापरागस्त्यमुखर्पिवन्द्यम् ।
परागभस्तिच्छवितोऽधिकप्रभ, परागजावि कृतसद्‌गति श्रये ॥ २० ॥–इन्द्रवशा

परागतार्थप्रतिपादनात् प्रिय, जनपराऽ(जनापरा)गर्ह्यवच परम्परम् ।
परागलद्दूपणधोरणीद्ध, परागदाधिन्नमह नवीमि ॥ २१ ॥–उपेन्द्रवशा

परागरुत्मत्स्थितिमूर्त्तिसेव्य, परागरुद्रव्यसुधूपयोग्यम् ।
परागमाचारविचारणीय, पराऽगदकारमह भजामि ॥ २२ ॥–उपेन्द्रवज्रा

माद्यत्परागम्यपदप्रदान–दक्ष परागर्वगुण श्रयध्वम् ।
सुरूपरागोत्थविकारतर्जक, जरापरागत्वरभीतिवर्जितम् ॥ २३ ॥–इन्द्रवशा

भूयाः परागपुरुषेषु कृपा दधानो
मायापरागवनितावधवैनतेय ।
यः कोपरागरहितस्त्वमसीन ! तेन
सेवे भवन्तमपरागमशैलवज्रम् ॥ ७ ॥–वसन्त०

ध्वस्तोपरागपरभागनिभूषिताङ्गं
सूरापरागमसमीकृतकर्मधर्मम् ।
पुण्यापरागजनदत्तभव भजेयं
देवाऽपरागणितलक्षणसञ्चयं त्वाम् ॥ ८ ॥–,,

सेवाऽपरागणितसौख्यकर श्रयामि
हृत्तापरागहरण करण गुणानाम् ।
प्रोद्यत्परागतिगत शरण जनाना
मिष्टार्थसाधनसुपर्वपरागकल्पम् ॥ ९ ॥–,,

तेजोविराजितपराङ्गसमीपराग-
द्वेषच्छिद धनहयद्विपरागहीनम् ।
गेमे(ये) सति द्रुतपराग ! नमस्करोमि
गेस्थे(ये?) जयेऽकलितपापपरागमाशु ॥ १० ॥–,,

गेस्थेजिते जननमृत्युजरापराग
मा देहि लच्छिवपद विलसत्परागम् ।
राज्ञेहतस्मरपरागपकोपराग
रिक्त परागणधरस्थितिकार्यकारिन् ! ॥ ११ ॥–,,

पस्था(?)ङ्गदेवकृतचन्दनसत्परागो
यो द्वापरागमगिरोऽस्ति न जङ्गपूक ।
गेय विधाय कृतदुष्कृतसम्पराग
मीडे प्रतीतमपरागमभिख्यया तम् ॥ १२ ॥–,,

गेपाग्रगे जितपुनर्भवभापराग-
रास्थानके तमुदिते भुवने पराग ! ।
गेशे कृते निहतमोहमहापराग !
गेस्थे पणे कुरु सुख शमधीपराग ! ॥ १३ ॥–,,

१ अपरदार्शनिकसिद्धान्तपर्वतभेदने वज्रमिव वज्रम् । २ मोक्षगतिप्राप्तम् । ३ कल्पवृक्षतुल्यम् ।

पण्डितश्रीगुणविनयगणिगुम्फितः

# ॥ 'सव्वत्थ'शब्दार्थसमुच्चयः ॥

प्रणम्यैश्वार्हत. सर्वान्, शर्वचद् गोविलासिन' ।
सव्वत्थेति वरे शब्दे, क्रियतेऽर्थसमुच्चय ॥

सर्वाणि अस्त्राणि हस्तेपु येपा ते सर्वास्त्रा.–सुभटा' 'दीर्घह्रस्वौ मिथो वृत्तौ' (सिद्ध० अ० ८, पा० १, सू० ४) इति ह्रस्व ॥ १ ॥

सर्वे च ते अर्थाश्च सर्वार्था ॥ २ ॥

सार्वो–भगवान् तद्वत् तिष्ठन्ति इति सार्वस्था'–गणधराः । 'ह्रस्वः सयोगे' (सिद्ध० ८–१–८४) इति ह्रस्व ॥ ३ ॥

सा–श्री तद्धेतुत्वात् सा अर्वणि–हये तिष्ठतीति [1]{अर्वस्था सा चासौ अर्वस्था चेति} सार्वस्था–अच्छुप्ता देवी ॥ ४ ॥

सद् वस्त्रं येपा ते सद्वस्त्रा –दीपिका ॥ ५ ॥

व्यथा अर्हन्तीति व्यथ्या'–परपीड्या –कातरा तै सह वर्तन्त इति सव्यथ्या.–निर्वल-बला भूपाला ॥ ६ ॥

सर्वान् त्रायन्त इति सर्वत्रा –गुरव. ॥ ७ ॥

आसन् 'आस उपवेशने' (पा० धा० १०२१) भावक्विवन्त, सव्ये–वामभागे अर्थात् शकटस्य आस् सव्यास्, तत त्रस्यन्तीति सव्यास्त्रा –निस्थामानो वृपभा 'अन्यतोऽपि च' (कातन्त्रे सू० ६३६) इति डप्रत्यय ॥ ८ ॥

सह व्यर्थ –अपार्थकै प्रयोजनै निर्वर्तन्त इति सव्यर्था ॥ ९ ॥

विशिष्टया अर्थ इति सज्ञया सह वर्तन्त इति सव्यर्था –यौगा, नैयायिकमते हि द्रव्या-दीना त्रयाणा अर्थ इति सज्ञा ॥ १० ॥

सद्भि व्यस्ताः–खण्डिता सद्व्यस्ता –खला ॥ ११ ॥

सार्वत्रा सार्वमित्यर्थ वन्दे इति क्रिया देवमनुष्य० इत्यत्र 'बहुलम्' (सिद्ध० ५–१–२) इति वचनात् अन्यत्रापि द्वितीयार्थे सप्तम्यर्थे च त्राप्रत्यय ॥ १२ ॥

शर्वो–महेशः तस्य अस्त्राणि, प्राकृतत्वात् पुस्त्वम् ॥ १३ ॥

---

१ गायकवाडपौर्वात्यमन्दिर(Oriental Institute)सत्काया प्रतेराधारेण पाठान्तराणि सूचितानि पण्डितवर्यैं श्रीयुतलालचन्द्रैः । तेपु यानि विशेपेणोपयुक्तानि तेपा समावेशो मूलभागे निर्दिष्टो मया { } एतच्चिह्नेन, अवशिष्टानि तु प्राय सन्निवेशितानि टिप्पणीपु ।

परागजानारिविशुद्धवंश , परागरिष्टस्थितिभेददर्शी ।
सेनापरारि(गा)नतचक्रमाज., कृपापराऽगाजिदयाक्य ! जीया ॥२४॥–उपजातिः

यो दीपरागाद्गिसमात्मबोधनो, विलापरागादिविमुक्तचेता. ।
नि.स्वापराऽगास्वतरस्वरूप , सुरापरागाह्यगुण सुमेध्य ॥ २५ ॥–,,

अपूर्वराणां(गा)द्रपरागजात–शील पराऽगन्धरच प्रकाशम् ।
परागतिप्राप्त ! परागतिज्ञ, स्तोष्ये परागोपगतिं प्रतीतम् ॥ २६ ॥–,,

वन्दे परागभंगतिव्यतीत, सदापरागादतप प्रवृत्तम् ।
क्रूरापराद्वारकशोणपाणि, परा गरीय पदवीं श्रयन्तम् ॥ २७ ॥–,,

श्रीमद्वाचकचक्रवतिसुगुरश्रीहर्षकल्लोलसच्-
छिष्यः पण्डितमण्डलीबहुमत श्रीलक्ष्मिकल्लोलक ।
सैवेद रचयाञ्चकार सुपरागार्थाष्टयुक्त शत
तेनाप्नोतु कृती जन शिवसुख पुण्येन लब्धोदयम् ॥ २८ ॥–शार्दूल०

इति परागशब्दाष्टोत्तरशतार्थनिबद्ध साधारणजिनस्तवनम् ।

महामहोपाध्यायचक्रवर्तिश्रीहर्षकल्लोलगणिक्रमकमलमरालायमानेन
पण्डितलक्ष्मीकल्लोलगणिना रचयाञ्चक्रे ॥



पण्डितश्रीगुणविनयगणिगुम्फितः

# ॥ 'सव्वत्थ'शब्दार्थसमुच्चयः ॥

प्रणम्यैश्चार्हत सर्वान्, शर्ववद् गोविलासिन' ।
सवत्थेति वरे शब्दे, क्रियतेऽर्थसमुच्चय' ॥

सर्वाणि अस्त्राणि हस्तेपु येपा ते सर्वास्त्रा'–सुभटा. 'दीर्घह्रस्वौ मिथो वृत्तौ' (सिद्ध० अ० ८, पा० १, सू० ४) इति ह्रस्व ॥ १ ॥

सर्वे च ते अर्याश्च सर्वार्या ॥ २ ॥

सार्वो–भगवान् तद्वत् तिष्ठन्ति इति सार्वस्था –गणधराः । 'ह्रस्वः सयोगे' (सिद्ध० ८–१–८४) इति ह्रस्व ॥ ३ ॥

सा–श्री तद्धेतुत्वात् सा अर्वणि–हये तिष्ठतीति [1]{अर्वस्था सा चासौ अर्वस्था चेति} सार्वस्था–अच्छुसा देवी ॥ ४ ॥

सद् वस्त्र येपा ते सद्वस्त्रा –दौपिका ॥ ५ ॥

व्यथा अर्हन्तीति व्यथ्या –परपीड्या –कातरा तै सह वर्तन्त इति सव्यथ्या'–निर्वलवला भूपाला ॥ ६ ॥

सर्वान् त्रायन्त इति सर्वत्रा –गुरव ॥ ७ ॥

आसन् 'आस उपवेशने' (पा० धा० १०२१) भावक्विवन्त', सव्ये–वामभागे अर्थात् शकटस्य आस् सव्यास्, तत त्रस्यन्तीति सव्यास्त्रा.–निस्थामानो वृपभा 'अन्यतोऽपि च' (कातन्त्रे सू० ६३६) इति डप्रत्यय ॥ ८ ॥

सह व्यर्थै –अपार्थकै प्रयोजनै निर्वर्तन्त इति सव्यर्थ्या ॥ ९ ॥

विशिष्टया अर्थ इति सज्ञया सह वर्तन्त इति सव्यर्थ्या –यौगा, नैयायिकमते हि द्रव्यादीना त्रयाणा अर्थ इति सज्ञा ॥ १० ॥

सद्भि व्यस्ताः–खण्डिता सद्व्यस्ताः–खला ॥ ११ ॥

सार्वत्रा सार्वमित्यर्थ वन्दे इति क्रिया देवमनुष्य० इत्यत्र 'वहुलम्' (सिद्ध० ५–१–२) इति वचनात् अन्यत्रापि द्वितीयार्थे सप्तम्यर्थे च त्राप्रत्यय ॥ १२ ॥

शर्वो–महेशः तस्य अस्त्राणि, प्राकृतत्वात् पुस्त्वम् ॥ १३ ॥

---

[1] गायकवाडपौवात्यमन्दिर(Oriental Institute)सत्काया प्रतेराधारेण पाठान्तराणि सूचितानि पण्डितवर्यैं श्रीयुतलालचन्द्रै । तेपु यानि विशेषेणोपयुक्तानि तेपा समावेशो मूलभागे निर्दिष्टो मया { } एतच्चिह्नेन, अवशिष्टानि तु प्राय सन्निवेशितानि टिप्पणीपु ।

सन्-प्रधानः ( यो ) वि-पक्षी अर्थाद् गरुड, स यथार्थं विघातकत्वाद् येषां ते सद्व्यरत्ना -सर्पा ॥ १४ ॥

सार्वः-अर्हन् तस्य अर्था -वाच्याः सार्वार्था-अतीताऽनागत-वर्तमानकालभाविनः पदार्था. खलु भगवत एव वाच्या भवन्ति, नान्यस्य ॥ १५ ॥

सार्वस्य-अर्हत वाक्ये अर्था -हेतव सार्वार्था अनन्ता ॥ १६ ॥

सर्वार्था -समस्तद्रव्याणि जिनैर्दीक्षासमये परित्यक्ता ॥ १७ ॥

सर्वार्था समस्तेभ्य पापेभ्यो ये अर्थाः-निवृत्तयः उपरमा इति यावत् ते आश्रिता जिनैरिति ॥ १८ ॥

सर्वे च ते अर्थाश्च-अभिधेया सर्वार्था भगवता वाच्या भवन्ति ॥ १९ ॥

सर्वार्था -समग्रप्रकारा व्याख्या भगवद्भिरेव विधातु शक्यन्ते, सुरनरतिरश्चा स्वस्वभाषाऽनुगतत्वाद् अर्हद्वाणीनामिति ॥ २० ॥

सर्वार्था -न्यक्षसासारिकवस्तूनि श्रीजिनैः परित्यक्ता ॥ २१ ॥

अत्र सप्तस्वर्थेषु "अर्थो हेतौ प्रयोजने ॥ निवृत्तौ विषये वाच्ये प्रकार-द्रव्यवस्तुषु ।" इत्यनेकार्थः (है० का० २, श्लो० २२४-२२५) सर्वेषा गुणाना अर्थन-प्रार्थन येषा ते सर्वार्था -जिना ॥ २२ ॥

श्रव्या -श्रवणार्हा धर्मोपचयहेतुत्वाद् अर्था यासु ता श्रव्यार्था -भगवद्वाण्य ॥२३॥

'पूलङ् प्रसूतौ' (                ) सवनार्हा सव्या ते च अर्था विद्यन्ते येषा ते सव्यार्था, यतोऽर्था सर्वेऽपि भगवद्भिरेव पूर्वं प्रादुष्कृता सूत्राणि च गणभृद्भिरिति ॥२४॥

'पूरू क्षेपे' (          ) सवानार्हा -निन्द्यार्हा[1] सव्या -आन्तरवैरिण तेषा विघाताय अर्था येषा ते सव्यार्था ॥ २५ ॥

सवन-मोक्षलक्ष्म्या सह सन्धानम् ॥ २६ ॥

यद्वा सवन-कर्मशत्रूणा पीडनम् ॥ २७ ॥

यद्वा सवन-करुणया आत्मन आर्द्रीभाव ॥ २८ ॥

यद्वा सवन-कर्मसेनाया मथनम् ॥ २९ ॥

यद्वा सवनं-त्रिजगदैश्वर्यविधानम् ॥ ३० ॥

यद्वा सवन-विशुद्धभावे गमनम्, तत् कर्तुमर्हा सव्या, ईदृग्विधा अर्था -सम्यग्ज्ञानादयो हेतवो { विद्यन्ते } येषा ते सव्यर्था ॥ ३१ ॥

अत्र षट्स्वर्थेषु 'षुनञ् सन्धा-क्लेद-पीडनमथे'[2] (          ) 'षुच् षुल् चैश्वर्य-प्रसवयो' (            ) इति धातुप्रयोगा ।

---

1 'निन्द्यार्हा' इति पाठान्तरम् । 2 'षुनञ् सन्धा० मन्थेषु' इति पाठान्तरम् ।

सन्–विद्यमानोऽङ्के वस्त॰–छागो येषा ते सद्वस्ताः–श्रीकुन्थुस्वामिनः ॥ ३२ ॥

सवनं–मेरुशिखरेऽभिषवः तदर्हाः सव्या , अर्थ्यन्ते मोक्षलक्ष्म्या ये तेऽर्थ्या , पश्चात् कर्मधारये सव्यार्थ्याः ॥ ३३ ॥

सर्वेषु ज्ञानादिषु आस्था {–यत्नो } येषा ते सर्वास्था॰ ॥ ३४ ॥

सर्वाणि वस्तूनि ज्ञानस्यास्थायामालम्बने विद्यन्ते {येषा} ते सर्वास्थाः ॥ ३५ ॥

सर्वेषा देवादीना व्याख्यानावसरे द्वादशसङ्ख्या आस्था –सभा येषा ते सर्वास्था॰ ॥३६॥

सर्वेषा मोक्षसुखाना आस्था–अपेक्षा येषा ते सर्वास्था ॥ ३७ ॥

"आस्था यत्नालम्बनयोरास्थानापेक्षयो " इति ( हैमेऽनेकार्थे का॰ २, श्लो॰ २२५ ) चतुर्ष्वर्थेषु आस्थाशब्द॰ पृथगर्थ॰ ।

सव –याग॰ विधेयतया विद्यते येषा ते सविन॰–यागकर्तारो मिथ्यात्विन , तैर्न स्तूयन्त इति सव्यस्ता 'अन्यतोऽपि च' (कातन्त्रे सू॰ ६३६) इति ड , सद्दृष्टिभिरेव खल्वर्हन्तः स्तूयन्त इति ॥ ३८ ॥

सन्–वन्धुरो वि॰–पक्षी हस॰, स अस्त –क्षिप्तो गत्या यैस्ते सव्यस्ता॰ ॥ ३९ ॥

सद्वि –प्रधानकान्ति , भावक्विवन्त । तत्र आस्था–यत्नो येषा ते सद्व्यास्था॰ ॥ ४० ॥

सद्वि –चारुगति एकसमयेन इतो मोक्षगमनात् तत्र अर्थो येषा ते सद्व्यर्था ॥ ४१ ॥

शस्य–श्रेयसो वी –व्याप्तिस्तत्र आस्था–अपेक्षा येषा ते शव्यास्था ॥ ४२ ॥

सताम्–आभव विद्यमानाना कर्मणा या वी –तिरस्कार सा एव अर्थो येषा ते सद्व्यर्था ॥ ४३ ॥

शस्य–सुखस्य वी –प्रजननं सा अर्थ्यते यैस्ते शव्यर्था ॥ ४४ ॥

अत्र पञ्चस्वर्थेषु 'वील् कान्ति–गति–व्याप्ति–क्षेप–प्रजनन–खादनेषु' ( ) इति धातुप्रयोगे भावक्विवन्तरूपाणि ।

शस्य–शुभस्य व्री –वरण 'व्रीग् वृत्याम्' ( ) भावक्विवन्त॰, तत्र अर्थो येषा ते शव्र्यर्था ॥ ४५ ॥

सति मोक्षे वान्ति–गच्छन्तीति सद्वा ॥ ४६ ॥

यद्वा सत कमरिपून् वान्ति–हिंसन्ति इति सद्वा 'आतो॰ विच्' (कातन्त्रे सू॰ ६५४) अर्थ्यन्त इति अर्थ्या । पश्चात् कर्मधारय सद्वार्थ्या 'दीर्घह्रस्वौ मिथो वृत्तौ' (सिद्ध॰ ८–१–४ ) इति ह्रस्व ॥ ४७ ॥

---

१ 'यी ' इति पाठान्तरम् । २ 'वि ' इति पाठान्तरम् । ३ 'प्रजनन' इति पाठान्तरम् । ४ 'प्रजनन–' इत्यपि पाठ ।

सन्-प्रधानः (यो) वि॰-पक्षी अर्थात् गरुड, स एवार्थः विघातकरणात् येषां ते सवृव्यर्था -सर्पाः ॥ १४ ॥

सार्वः-अर्हन्, तस्य अर्था -वाच्याः सार्वार्था -अतीताऽनागत-वर्तमानकालभाविनः पदार्था खलु भगवत एव वाच्या भवन्ति, नान्यस्य ॥ १५ ॥

सार्वस्य-अर्हत वाक्ये अर्था -हेतवः सार्वार्था अनन्ता ॥ १६ ॥

सर्वार्था -समस्तद्रव्याणि जिनैर्दीक्षासमये परित्यक्ता ॥ १७ ॥

सर्वार्था समस्तेभ्य पापेभ्यो ये अर्था -निवृत्तयः उपरमा इति यावत् ते आश्रिता जिनैरिति ॥ १८ ॥

सर्वे च ते अर्थाश्च-अभिधेया सर्वार्था भगवता वाच्या भवन्ति ॥ १९ ॥

सर्वार्था -समग्रप्रकारा व्याख्या भगवद्भिरेव विधातु शक्यन्ते, सुरनरतिरश्चा स्वस्वभावाऽनुगतत्वाद् अर्हद्वाणीनामिति ॥ २० ॥

सर्वार्था -व्यक्षसासारिकवस्तूनि श्रीजिनैः परित्यक्ता ॥ २१ ॥

अत्र सप्तस्वर्थेषु "अर्थो हेतौ प्रयोजने ॥ निवृत्तौ विषये वाच्ये प्रकार-द्रव्यवस्तुषु ।" इत्यनेकार्थ (है० का० २, श्लो० २२४-२२५) सर्वेषा गुणाना अर्थन-प्रार्थन येषा ते सर्वार्था -जिनाः ॥ २२ ॥

श्रव्या -श्रवणार्हा धर्मोपचयहेतुत्वाद् अर्था यासु ता श्रव्यार्था -भगवद्वाण्य ॥२३॥

'पूलङ् प्रसूतौ' (        ) सवनार्हा सव्या ते च अर्था विद्यन्ते येषा ते सव्यार्था, यतोऽर्था सर्वेऽपि भगवद्भिरेव पूर्वं प्रादुष्कृता सूत्राणि च गणभृद्भिरिति ॥२४॥

'पूश् क्षेपे' (        ) सवानार्हा -निन्द्यार्हा[1] सव्या -आन्तरवैरिण तेषा विघाताय अर्थो येषा ते सव्यार्था ॥ २५ ॥

सवन-मोक्षलक्ष्म्या सह सन्धानम् ॥ २६ ॥

यद्वा सवन-कर्मशत्रूणा पीडनम् ॥ २७ ॥

यद्वा सवनं-करुणया आत्मन आर्द्रीभाव ॥ २८ ॥

यद्वा सवन-कर्मसेनाया मथनम् ॥ २९ ॥

यद्वा सवन-त्रिजगदैश्वर्यविधानम् ॥ ३० ॥

यद्वा सवन-विशुद्धभावे गमनम्, तत् कर्तुमर्हा सव्या, ईदृग्विधा अर्था -सम्यग्ज्ञानादयो हेतवो (विद्यन्ते) येषा ते सव्यर्था ॥ ३१ ॥

अत्र षट्स्वर्थेषु 'षुनज् सन्धा-क्लेद-पीडनमथे'[2] (        ) 'षुच् षुल् चैश्वर्य प्रसवयो' (        ) इति धातुप्रयोगा ।

---

१ 'निन्दार्हा' इति पाठान्तरम् । २ 'षुनज् सन्धा॰ मन्थेषु' इति पाठान्तरम् ।

श्रवणार्हा' श्राव्याः–ज्ञेया' 'श्रु गतौ' 'ये गत्यर्थास्ते ज्ञानार्था'' इति तेऽर्थाः येषा ते श्रव्यार्था ॥ ६३ ॥

श्राम्यन्ति–तपस्यन्ति सयमानुष्ठानेन इति श्रा डप्रत्यय', तान् अवति नरकपातात् इति श्रौः–धर्म 'अव रक्षणे' ( सिद्ध० धा० ) क्विप् ऊव् वृद्धिश्च त यन्ति–जानन्तीति श्राव्य । 'ईल् गतौ' ( ) अर्थ्यन्त इति अर्थ्या' पश्चात् कर्मधारय श्राव्यर्थ्या ॥६४॥

श्राम्यन्ति–खिद्यन्ते कृपया परदु खवीक्षणेन इति श्रा 'श्रमु भ्यत्रिश्र्इर् तप खेदयो:' ( ) डप्रत्यय । अवि –मेपः तस्य अर्थो येषा ते अव्यर्था , तदङ्गोद्भवाया ऊर्णाया' साधुरजोहरणदशोपयोगित्वात् पश्चात् श्राश्च ते अव्यर्थाश्चेति श्राव्यर्था'–साधव. ॥ ६५ ॥

शाम्यन्तीति शाः 'शम् उपशमे' डप्रत्यय , विगतोऽर्थो–द्रव्य येभ्यस्ते तत्परित्याग-कर्तृत्वाज्जिनानामिति व्यर्था , पश्चात् कर्मधारये शव्यर्थाः ॥ ६६ ॥

स्यन्ति–नाशयन्ति दु खानीति सा 'षोयू नाशे' ( ) डः । अर्वो–वध' कर्म-रिपूणा 'अर्व वधे' ( ) अव् स एवार्थो येषा ते अर्वार्था , पश्चात् साश्च ते अर्वार्थाश्चेति सार्वार्था. ॥ ६७ ॥

सा–लक्ष्मीस्ता विशेषेण अर्थयन्ते–याचन्त इति साव्यर्था , 'अर्थत्कङ् याचने' ॥ ६८ ॥

श्रवण श्रव' श्रव् तत्त्वाना आकर्णन स विद्यते येषा ते श्रविणो–भव्याः तै. अर्थ्यन्ते ये ते श्रव्यर्थ्या ॥ ६९ ॥

सति–मोक्षे वसतीति सद्वस्ता–श्रीजिनः, 'वस् निवासे' ( ) तृच् ॥ ७० ॥

शलन्ति–शिव गच्छन्ति इति शा 'शल्ज् गतौ' ( ) ड., उ.–सुखम्, ई.–केवललक्ष्मी व्यौ ते–अर्थ्येते यैस्ते व्यर्थ्या शाश्वते व्यर्थ्याश्चेति शव्यर्थ्या ॥ ७१ ॥

शलयन्ते–श्लाघन्ते यान् लोका इति शा 'शल्ङ्क् श्लाघे' ड , वी –विशिष्ट ज्ञानं 'ईल गतौ' तस्या अर्थो येषा ते व्यर्था , शाश्वते व्यर्थाश्चेति शव्यर्था. ॥ ७२ ॥

सन्यन्ते–सेव्यन्ते लोकैरिति सा 'षन् सम्भक्तौ' डप्रत्ययः अवन अव –तत्त्वार्थशब्दन 'उङ् शब्दे' अच् । स विद्यते येषा ते अविन –सभ्या , तै अर्थ्यन्ते ये ते अव्यर्थ्या , साश्च ते अव्यर्थ्याश्च साव्यर्थ्या ॥ ७३ ॥

सनन्ति–ददति सर्वेषा अभयदानमिति सा , 'षण् दाने' ( ) डे रूपम् , अवनं अव अच्, एकेन्द्रियादिजन्तूना रक्षणम् १, मोक्षगमनम् २, प्रीतिकारिणी कान्ति ३, धर्मप्रीति ४, तृप्ति ५, तत्त्वानामवगमनम् ६, मोक्षपुरीप्रवेश ७, धर्मस्य श्रवणम् ८, त्रिज-गत्स्वामित्वम् ९, शिवसुखयाचनम् १०, विशुद्धा क्रिया ११, तत्त्वश्रवणेच्छा १२, तपो-दीप्ति १३, धमस्य प्राप्ति १४, सयमश्रिया आलिङ्गनम् १५, कर्मरिपूणा हिंसनम् १६,

---

१ 'च' इत्यधिकोऽपि पाठः ।

सन्तो मोक्षे गत्वरा 'षद्लृ गतौ' (सिद्ध० धा०) क्विप्, विशिष्टा ई–कान्तिः भावक्विबन्त तस्यैवार्थो येषा ते व्यर्थाः, पश्चाद् विशेषणद्वयकर्मधारय सद्व्यर्था ॥ ४८ ॥

सर्वेषा दुःखाना असन–तिरस्करण सर्वास्. 'असूय क्षेपे' (    ) भावक्विबन्तः तत्र तिष्ठति सर्वासस्था 'सुपि स्थः' (पाणिनीये ३–२–४) इति क ॥ ४९ ॥

सति विद्यमानस्य लोकालोकाकाशस्य केवलज्ञानेन वसन 'वस आच्छादने, 'वसस्ल स्तृतौ' (    ) भावक्विबन्त, ता तन्वन्तीति सद्वस्ता, 'तनु(यी) विस्तारे' (सिद्ध० धा०) 'अन्यतोऽपि च' (कातन्त्रे सू० ६३६) इति ड ॥ ५० ॥

सति निरुपद्रवे स्थाने वसन् वस–निवसन तया तसयन्ति–भूषयन्ति स्वात्मानमिति सद्वस्ता "तसिक्यलङ्कृतौ" (    ) डप्रत्यय ॥ ५१ ॥

सत्सु–सप्तसु क्षेत्रेषु वपति धर्मबीजमिति सद्वा डप्रत्यय, स्तूयन्ते लोकैरिति स्ता 'ष्टुञ् स्तुतौ' (सिद्ध० धा०) डप्रत्यय पश्चाद् विशेषणकर्मधारय ॥ ५२ ॥

सत् कर्मणा विशरण 'षद्लृ विशरणे' क्विप् तया वन्द्यन्ते–स्तूयन्त इति सद्वा 'वदिङ् अभिवादनस्तुत्यो' (    ) डप्रत्यय । अश्नन्ति–भक्षयन्ति देहमिति अशो–रोगा क्विप् ता त्रासयन्ति–निवारयन्ति इति 'त्रसक् निवारणे' (    ) पश्चात् कर्मधारय सद्–वस्त्रा 'अन्यतोऽपि च' (कातन्त्रे सू० ६३६) इति ड ॥ ५३ ॥

सद्भिः उश्यन्ते–वाश्यन्त इति सद्वश क्विप्, ताम्यन्ति–खिद्यन्ते सयमार्थमिति ता डप्रत्यय पश्चात् कर्मधारये सद्वशता ॥ ५४ ॥

सत–व्याख्यानार्हपदार्थान् वदन्तीति सद्वा, स्त्यायन्ति–सङ्घातयन्ति गुणानिति स्ता डप्रत्यय पश्चाद् विशेषणद्वयकर्मधारय ॥ ५५ ॥

सन्–रुचिरो यो वाश्–शब्दन 'वाशृ शब्दे' (    ) भावक्विबन्त तेन स्तूयन्त इति सद्वाशता ॥ ५६ ॥

सता–श्रवणार्हाणा भव्याना पुरो वचनं व डप्रत्यय, तेन अर्थ्यन्ते ये ते सद्वार्थ्या ॥५७॥

सन्–रम्यो {यो} वो–महेश तद्वद् अर्थ्यन्ते ये ते सद्वार्थ्या ॥ ५८ ॥

सन् यो वो–वात तद्वद् अप्रतिबद्धत्व अर्थ्यते यैस्ते सद्वार्थ्या ॥ ५९ ॥

श्रव्या–प्राप्या विषयतया अर्था येषा ते श्रव्यार्था 'श्रु गतौ' (    ), 'ये गत्यर्थास्ते प्राप्त्यर्था' इति वचनात् ॥ ६० ॥

स–सूर्य तद्वद् विशिष्टा या ई–कान्ति सा अर्थ्यते यैस्ते सव्यर्थ्या ॥ ६१ ॥

से–परोक्षे अतीन्द्रियतया विविधा ये अर्थास्ते सव्यर्था, ते अर्हद्भि प्रणीता इति ॥६२॥

---

१ 'वस आच्छादनम्' इति क–पाठ । २ 'लौकिकै०' इति पाठान्तरम् ।

श्याव्यर्थ्या -श्रीजिना', 'सर्वत्र०'(सिद्ध० ८-२-७९) रलुक्, 'अधो म-न-या' (सिद्ध० ८-२-७८) यलुक् ॥१०२॥

शी.-सिद्धिशिलाशय्याया शयनं अप्रच्युतित्वेनावस्थानमित्यर्थ ता अवन्ति-इच्छन्ति इत्येवंशीला श्याविन, 'अव इच्छायाम्' (सिद्ध० धा०) ते च ते अर्थ्याश्चेति श्याव्यर्थ्या' ॥ १०३ ॥

शी -कर्मरिपूणा हिसन ता अवन्ति-जानन्तीत्येवशीला श्याविन. 'अव गतौ' (सिद्ध० धा०) । आ-ब्रह्मा तद्वत् सम्यग्ज्ञानादित्रयविधातृत्वेन स्तूयन्त इति 'क्वचित्०' ( सिद्ध० ५-१-१७१ ) इति डे आस्ता पश्चात् कर्मधारये श्याव्यास्ता ॥ १०४ ॥

त्सरु.-खड्गमुष्टि सा अर्थ्यते यैस्ते त्सर्व्यर्थ्या -शूरा , तैं किल वैरिमण्डलमण्डलाग्रमुष्टीरुत्सार्य तस्यैव तैं कृत्वा प्रतिघात क्रियत इति ॥ १०५ ॥

स्व -स्वर्गस्तस्य प्राप्त्यर्थ विशिष्टोऽर्थो येपा ते स्वर्व्यर्था'-सरागसाधव ॥ १०६ ॥

स्वर्वता- शोभनहयानामर्थो येपा ते स्वर्वर्था.-सन्नृपा "यस्याश्वास्तस्य मेदिनी" ( ) इति वचनात् ॥ १०७ ॥

स्व -स्वर्ग. उपलक्षणत्वात् समस्तोऽपि परलोकः स व्यस्तो यैस्ते स्वर्व्यस्ता.-लोकायतिका ॥ १०८ ॥

शरु -कोप' सोऽस्तो यैस्ते शर्वस्ता.-क्षीणकपाया' साधवः ॥ १०९ ॥

शरो -वज्रस्य धरणे अर्थो येपा ते शर्वर्था -पुरन्दरा ॥ ११० ॥

शरूणा-शराणामभिवैरिप्रक्षेपणे आस्था-यत्नो येपा ते शर्वास्था -वीरा "शरु. कोपे शरे वज्रे" ( हैमे का० २, श्लो० ४५० ) इत्यनेकार्थोक्ते ॥ १११ ॥

स्वरो -अध्वरस्य विधाने अर्थो येपा ते स्वर्वर्था -याज्ञिका. ॥ ११२ ॥

स्वरु{वद्}-वज्रवदक्षोभ्या अर्था येपु ते स्वर्वर्था -श्रीजिनागमाः ॥ ११३ ॥

स्वरुवद्-बाणवत् प्रतिवादिप्रत्यर्थिप्रतिघातकत्वेन विजयिन कलियुगेऽर्थो येपा ते स्वर्वर्था -नवाङ्गीवृत्तिकारिण श्रीअभयदेवसूरय "स्वरु स्याद् यूपखण्डके । अध्वरे कुलिशे बाणे" ( हैमे का० २, श्लो० ४५४-४५५ ) इत्यनेकार्थोक्ते ॥ ११४ ॥

शावा -बाला शावेत्युपलक्षण तेन तरुणप्रवयसामपि ग्रहण ते विद्यन्ते यस्मिन् गच्छे स शावी-श्रीमद्बृहत्खरतरगच्छ तस्य पालने आस्था-यत्नो येपा ते शाव्यास्था -श्रीजिनचन्द्रसूरय , 'ह्रस्व सयोगे' ( सिद्ध० ८-१-८४ ) इति ह्रस्व ॥ ११५ ॥

सेत्यनेन वीत्यनेन च स्वगुरु-कविनाम सूचित तत्र सेत्यनेन तुलादण्डमध्यग्रहणन्यायेन उभयपार्श्वस्थयोर्जयो{मयो}र्ग्रहण, तथा {च} 'जयसोमा' इत्यागतम् । तेपा शिष्येण वीत्यनेन च तन्न्यायेनैव गुण-नययोर्ग्रहणम् । तथा च 'गुणविनय' इति सिद्धम् । तेन गुणविनयेन प्ररूपिता ये अर्था{-हेतव}स्ते सव्यर्था तत्त्वोद्बोधका भवन्ति ॥ ११६ ॥

दारुणपापदारुणा दहनम् १७, शुभो भाव १८, निर्मलाध्यवसायस्य वृद्धिः १९ एवं ॥९१॥
स विद्यते येषां ते शविन'-साधव' ते अर्थ्यन्ते ये ते अभ्यर्थ्या , पश्चात् श्वाश्च ते अभ्यर्थ्या-श्चेति साभ्यर्थ्या. 'अव रक्षण-गति-कान्ति-प्रीति-तृप्त्यवगमन-प्रवेश-श्रवण-स्वाम्यर्थ-याचन-क्रियेच्छा-दीप्त्यवाप्त्यालिङ्गन-हिंसा-दहन-भाववृद्धिषु' १० एवम् ॥ ९२ ॥

शीयन्ते-तीक्ष्णीकुर्वन्ति स्वदेशमुपीडार्थां विविधशास्त्रशाणोल्लेखेनेति शद , 'शद्लृ शातने' क्विप्, विध्यन्ति-ताडयन्ति कर्मशत्रूनिति व्या 'व्यध ताडने' ( ) ड , तिष्ठन्ति धर्ममार्गे इति स्था , पश्चात् विशेषण(त्रय)कर्मधारये शद्व्यस्था -साधव ॥ ९३ ॥

सदन्ति-विसीदन्ति पापकारणेनेति सद 'षद्लृ विशादे' ( ) क्विप्, विगत इ -कामो येभ्यस्ते वय , अ -कृष्ण तेन स्तूयन्त इति अस्ता , डः, पश्चात् विशेषणत्रय-कर्मधारये सद्व्यस्ता -श्रीनेमिस्वामिन ॥ ९४ ॥

शवा विद्यन्ते यस्मिन् भूभागे स शवी-स्मशानादिभूभाग' तत्र आ-समन्तात् देवादिभिरक्षोभ्यत्वेन तिष्ठन्तीति शव्यास्था -साधुविशेषा , द्वादशप्रतिमाप्रोद्धारो हि तत्रैव किल निवसन्तीति ॥ ९५ ॥

सा-लक्ष्मी ता अवन्तीत्येवंशीला , शीलार्थे णिनि , साविन , अश्नन्ति-अशुभतृणानि अदन्तीति अश , तदपनेतृत्वाद् था -भयाद् रक्षितार "थो भीत्राणे" इत्येकाक्षरनाममालावचनात् । पश्चात् विशेषणत्रयकर्मधारये साव्यश्था -श्रीजिना ॥ ९६ ॥

सत्-सत्य वाचि विद्यते येषा ते अव्यभिचारिवचनत्वात् सद्वा 'क्वचित् (ड )' (सिद्ध० ५-१-१७१ ) इति ड , अतन्ति-सातत्येन गच्छन्ति प्राप्नुवन्त्यात्मानमिति अद -दु ख-व्यूहा 'अत सातत्यगमने' 'ये गत्यर्थास्ते प्राप्त्यर्था ' इति वचनात् क्विप्, तेषा दलीकरणे था इव-अद्रय इव ये ते अत्था "थो भीत्राणे भवेऽद्रौ" ( ) इति (एकाक्षर० ) वचनात्, पश्चात् सद्वाश्च ते अत्थाश्च सद्वात्था ॥ ९७ ॥

सन्त सुरासुरादिलोकै पूजिता । "सच्छोभने प्रशस्ते स्याद् विद्यमाने च सत्यपि । सत्पूजितयोश्च" ( ) इत्यनेकार्थवचनात्, वौति सिद्धिशिलालक्षणे उपरितनाकाशे[2] आ-समन्तात् तिष्ठन्ती{ति}-व्यास्था , "वि खगे खेऽपि" ( ) इति वचनात् सन्तश्च ते व्यास्थाश्च सद्व्यास्था -श्रीजिना ॥ ९८ ॥

श्री -अतिशायिनी प्रभा १, गभीरार्था सरस्वती २, त्रिजगदैश्वर्यकमला ३, ज्ञानादिसम्पत् ४, "श्री प्रभा भारती-लक्ष्मी-सम्पत्सु" इति ( ) वचनात्, तां अवन्तीत्येवशीला श्राविन', अर्थ्यन्ते मोक्षार्थिभिरिति अर्थ्या पश्चात् श्राविनश्च ते अर्थ्याश्चेति

१ श्रीअमरचन्द्रसूरिकृताया काव्यकल्पलताभिधाया कविशिक्षायां तृतीये प्रताने पञ्चमे स्तबके ११० तमे पृष्ठे पाठो यथा—

"थो भीत्राणे-महीध्रे द्र मस्न्या दा दातृ दानयो "

२ 'रितलाकाशे' इति पाठान्तरम् ।

श्याव्यर्थ्या.–श्रीजिना', 'सर्वत्र०'(सिद्ध० ८–२–७९) रलुक्, 'अधो म-न-या' (सिद्ध० ८–२–७८) यलुक् ॥१०२॥

शी.–सिद्धिशिलाशय्याया शयनं अप्रच्युतित्वेनावस्थानमित्यर्थ' ता अवन्ति–इच्छन्ति इत्येवंशील श्याविन, 'अव इच्छायाम्' (सिद्ध० धा०) ते च ते अर्थ्याश्चेति श्याव्यर्थ्या' ॥ १०३ ॥

शी –कर्मरिपूणा हिंसन ता अवन्ति–जानन्तीत्येवशीला. श्याविन 'अव गतौ' (सिद्ध० धा०)। आ–ब्रह्मा तद्वत् सम्यग्ज्ञानादित्रयविधातृत्वेन स्तूयन्त इति 'क्वचित्०' ( सिद्ध० ५–१–१७१ ) इति डे आस्ता' पश्चात् कर्मधारये श्याव्यास्ता ॥ १०४ ॥

त्सरु –खड्गमुष्टि सा अर्थ्यते यैस्ते त्सर्व्यर्थ्या –शूरा , तै' किल वैरिमण्डलमण्डलाग्रमुष्टीरुत्सार्य तस्यैव तै कृत्वा प्रतिघात क्रियत इति ॥ १०५ ॥

स्व –स्वर्गस्तस्य प्राप्त्यर्थं विशिष्टोऽर्थो येषा ते स्वर्व्यर्था –सरागसाधव. ॥ १०६ ॥

स्वर्वता– शोभनहयानामर्थो येषा ते स्वर्वर्था.–सन्नृपा "यस्याश्वास्तस्य मेदिनी" (   ) इति वचनात् ॥ १०७ ॥

स्व –स्वर्ग उपलक्षणत्वात् समस्तोऽपि परलोकः स व्यस्तो यैस्ते स्वर्व्यस्ता.–लोकायतिका. ॥ १०८ ॥

शरु –कोप सोऽस्तो यैस्ते शर्वस्ता –क्षीणकपाया' साधव' ॥ १०९ ॥

शरो –वज्रस्य धरणे अर्थो येषा ते शर्वर्था –पुरन्दरा ॥ ११० ॥

शरूणा–शराणामभिवैरिप्रक्षेपणे आस्था–यत्नो येषा ते शर्वास्था –वीरा. "शरु. कोपे शरे वज्रे" ( हैमे का० २, श्लो० ४५० ) इत्यनेकार्थोक्ते ॥ १११ ॥

स्वरो –अध्वरस्य विधाने अर्थो येषा ते स्वर्वर्था –याज्ञिका ॥ ११२ ॥

स्वरु{वद्}–वज्रवदक्षोभ्या अर्था येषु ते स्वर्वर्था –श्रीजिनागमाः ॥ ११३ ॥

स्वरुवद्–बाणवत् प्रतिवादिप्रत्यर्थिप्रतिघातकत्वेन विजयिन कलियुगेऽर्थो येषा ते स्वर्वर्था –नवाङ्गीवृत्तिकारिण श्रीअभयदेवसूरय "स्वरु स्याद् यूपखण्डके। अध्वरे कुलिशे बाणे" ( हैमे का० २, श्लो० ४५४–४५५ ) इत्यनेकार्थोक्ते ॥ ११४ ॥

शावा –बाला शावेत्युपलक्षण तेन तरुणप्रवयसामपि ग्रहण ते विद्यन्ते यस्मिन् गच्छे स शावी–श्रीमद्बृहत्खरतरगच्छ तस्य पालने आस्था–यत्नो येषा ते शाव्यास्था –श्रीजिनचन्द्रसूरय , 'ह्रस्व सयोगे' ( सिद्ध० ८–१–८४ ) इति ह्रस्व ॥ ११५ ॥

सेत्यनेन वीत्यनेन च स्वगुरु-कविनाम सूचित तत्र सेत्यनेन तुलादण्डमध्यग्रहणन्यायेन उभयपार्श्वस्थयोर्जयो{मयो}ग्रहण, तथा {च} 'जयसोमा' इत्यागतम्। तेषा शिष्येण वीत्यनेन च तन्न्यायेनैव गुण-नययोर्ग्रहणम्। तथा च 'गुणविनय' इति सिद्धम्। तेन गुणविनयेन प्ररूपिता ये अर्था{–हेतव}स्ते सव्यर्था तत्त्वोद्बोधका भवन्ति ॥ ११६ ॥

सा लक्ष्मीः तद्धेतुत्वात्, सा आः—ब्रह्मा तेन धीयते—जन्यते या सा आधीः—ब्रह्मपुत्री 'धीङ् प्रजनने' (         ) क्विप्, पश्चात् सा चासौ आधीश्च साधीः तथा प्रकटिता ये अर्थास्ते साध्यर्थाः ॥ ११७ ॥

सरस्वत्या हि मन्मुखद्वारा अमी 'सवत्थ'शब्दस्यैतावन्तोऽर्थाः प्रकाशिता इति कवि-[1]गर्वपरिहारः, यदहं विदधाम्यर्थजातं तत्र श्री(भगवत्या)वाग्देवतायाः प्रसाद इति ध्येयम् ॥

इति श्रीप्रमोदमाणिक्यगणिशिष्यश्रीजयसोमगणिशिष्यपण्डितगुणविनयगणिभिरमी अर्थाः
स्वबुद्ध्योत्प्रेक्षिता इति यत्किञ्चिदिहायुक्तमिवाभाति तदपि प्राकृतशैल्या सर्वमपि
सङ्गच्छते न दोषलवोऽप्याशङ्क्य इति विज्ञप्तिरस्ति ॥ श्रीरस्तु ॥



१ 'रिति' इति पाठान्तरम् ।

श्रीमद्रत्नशेखरसूरिसन्दृब्धं

# ॥ 'परवाया'[1]शब्दार्थनिरूपणम् ॥

"सुअणा १ पवरतुरगा २ सारहिणो ३ नाणिणो ४ अ वाइवरा ५ ।
सूआरा ६ जूआरा ७ गणिआ ८ वरगायणा ९ विप्पा १० ॥ १ ॥
धणिवरकुविदभवणा ११ कणा सुभिक्खम्मि १२ गिम्हि जलहितडा १३ ।
धुत्ता १४ दुन्नयसत्ता १५ धम्मिअचित्ता य धम्मम्मि १६ ॥ २ ॥
वेअविऊ १७ अ दयालू १८ वेला असुहा १९ पडो २० महासुहडो २१ ।
असई २२ सुतलुवाओ २३ महवाओ २४ पाउसि जवासो २५ ॥ ३ ॥
मज्जवसणी २६ अ अतिमजलहिठिई २७ मच्छसकुलतडागा २८ ।
अणुकूलपवणपोआ २९ अयवालगिहा ३० य जलहिमुहा ३१ ॥ ४ ॥
परपत्थणापरमणा ३२ निच्चदरिद्दा ३३ महासमुद्दा ३४ य ।
हलवाहगा ३५ य वहगा ३६ कुभारा ३७ गिरिणई ३८ मरुभू ३९ ॥ ५ ॥
कम्हारमही ४० सिद्धा ४१ महद्दुमा ४२ निवठिई ४३ सयपई ४४ अ ।
भेरीओ ४५ फलिअसाली ४६ मतिवरा ४७ धुत्तमित्ती ४८ अ ॥ ६ ॥
तिपढमनरगा ४९ निवकन्नगा ५० य राया ५१ य जायगा ५२ सुगिहा ५३ ।
सुहडा कुविआ ५४ तिसिआ ५५ वणउद्देसा य केरिसया ५६ ॥ ७ ॥
पागयभासाइ इह वण्णचउक्केण चेव पइपसिणं ।
पच्चुत्तर पयच्छसु जइ अइछेयत्तण वहसि ॥ ८ ॥"

ईषद् विमृश्य तयोक्तम्–'परवाया' इति । तत्र सुजना परवाच प्राणान्तेऽप्यन्यथाऽकरणात्, प्रकृष्टगिर इत्यर्थ १ ।

प्रवराश्वा –परवाजा प्रकृष्टवेगा 'क-ग च ज त द प य वा प्रायो लुग्' (सिद्धहैमे अ० ८, पा० १, सू० १७७) इति जलुक्, 'अवर्णो यश्रुति.' (सिद्ध० ८–१–१८०) इति अवर्णस्य यः २ ।

सारथय –प्रवाजा, प्रकृष्टरवेण आज –क्षेपः प्रेरणमर्थाद् वृषयोर्येषाम् ३ ।

ज्ञानिन –परावाया अवाय –निश्चय, 'दीर्घ ह्रस्वौ मिथो वृत्तौ' (सिद्ध० ८–१–४) इति ह्रस्व ४ ।

वादिवरा –परवादा ५ ।

सूपकारा –परपाका, 'पो व' (सिद्ध० ८–१–२३१) इति पस्य व' ६ ।

---

१ श्रीरत्नशेखरसूरिसूत्रितस्य श्राद्धप्रतिक्रमणसूत्रस्य अर्थदीपिकाऽऽख्यस्वोपज्ञविवरणान्तर्गतमिदम् ।

सा लक्ष्मी' तद्धेतुत्वात् सा आ'-ब्रह्मा तेन धीयते-जन्यते या सा आधी'-ब्रह्मपुत्री 'धीङ् प्रजनने' (          ) क्विप्, पश्चात् सा चासौ आधीश्च साधी तया प्रकटिता ये अर्थास्ते साध्यर्थाः ॥ ११७ ॥

सरस्वत्या हि मन्मुखद्वारा अमी 'सयरथ शब्दस्यैतावन्तोऽर्थाः प्रकाशिता इति कवि-[1]गर्वपरिहारः, यदद्य विदधाम्यर्थजातं तत्र श्री(भगवत्या)वाग्देवताया प्रसाद इति ध्येयम् ॥

इति श्रीप्रमोदमाणिक्यगणिशिष्यश्रीजयसोमगणिशिष्यपण्डितगुणविनयगणिभिरमी अर्थाः
स्वबुद्ध्योत्प्रेक्षिता इति यत्किञ्चिदिहायुक्तमिवाभाति तदपि प्राकृतशैल्या सर्वमपि
सङ्गच्छते न दोषलवोऽप्याशङ्क्य इति निशातिरेखि ॥ श्रीरस्तु ॥



१ 'रिति' इति पाठान्तरम् ।

श्रीमद्रत्नशेखरसूरिसन्दृब्धं

# ॥ '[1]परवाया' शब्दार्थनिरूपणम् ॥

"सुअणा १ पवरतुरगा २ सारहिणो ३ नाणिणो ४ अ वाइवरा ५ ।
सूआरा ६ जूआरा ७ गणिआ ८ वरगायणा ९ विप्पा १० ॥ १ ॥
धणिवरकुविंदभवणा ११ कणा सुभिक्खम्मि १२ गिम्हि जलहितडा १३ ।
धुत्ता १४ दुन्नयसत्ता १५ धम्मिअचित्ता य धम्मम्मि १६ ॥ २ ॥
वेअविऊ १७ अ दयालू १८ वेला असुहा १९ पडो २० महासुहडो २१ ।
असई २२ सुततुवाओ २३ महवाओ २४ पाउसि जवासो २५ ॥ ३ ॥
मज्जवसणी २६ अ अतिमजलहिठिई २७ मच्छसकुलतडागा २८ ।
अणुकूलपवणपोआ २९ अयवालगिहा ३० य जलहिमुहा ३१ ॥ ४ ॥
परपत्थणापरमणा ३२ निच्चदरिद्दा ३३ महासमुद्दा ३४ य ।
हलवाहगा ३५ य वहगा ३६ कुभारा ३७ गिरिणई ३८ मरुभू ३९ ॥ ५ ॥
कम्हारमही ४० सिद्धा ४१ महद्दुमा ४२ निवठिई ४३ सयपई ४४ अ ।
भेरीओ ४५ फलिअसाली ४६ मतिवरा ४७ धुत्तमित्ती ४८ अ ॥ ६ ॥
तिपढमनरगा ४९ निवकन्नगा ५० य राया ५१ य जायगा ५२ सुगिहा ५३ ।
सुहडा कुविआ ५४ तिसिआ ५५ वणउद्देसा य केरिसया ५६ ॥ ७ ॥
पागयभासाइ इह वण्णचउक्केण चेव पइपसिण ।
पच्चुत्तर पयच्छसु जइ अइछेयत्तण वहसि ॥ ८ ॥"

ईषद् विमृश्य तयोक्तम्–'परवाया' इति । तत्र सुजना परवाच प्राणान्तेऽप्यन्यथाऽकरणात्, प्रकृष्टगिर इत्यर्थ १ ।

प्रवराश्वा–परवाजा प्रकृष्टवेगा 'क-ग च ज त द प य वा प्रायो लुग्' (सिद्धहैमे अ० ८, पा० १, सू० १७७) इति जलुक्, 'अवर्णो यश्रुति.' (सिद्ध० ८–१–१८०) इति अवर्णस्य यः २ ।

सारथय –प्रवाजा, प्रकृष्टरवेण आज –क्षेपः प्रेरणमर्थाद् वृषयोर्येषाम् ३ ।

ज्ञानिन –परावाया अवाय –निश्चय, 'दीर्घ ह्रस्वौ मिथो वृत्तौ' (सिद्ध० ८–१–४) इति ह्रस्व ४ ।

वादिवरा –परवादा ५ ।

सूपकारा –परपाका, 'पो व' (सिद्ध० ८–१–२३१) इति पस्य व ६ ।

---

१ श्रीरत्नशेखरसूरिसूत्रितस्य श्राद्धप्रतिक्रमणसूत्रस्य अर्थदीपिकाऽऽख्यस्वोपज्ञविवरणान्तर्गतमिदम् ।

द्यूतकाराः–परपाता', पाशकपातनादि ७ ।
गणिकाः–परव्याजाः, व्याजः–कपटम् ८ ।
वरगायना'–प्रारवाया' प्रकृष्ट आरवस्य आय –विस्तारो येषाम् ९ ।
विप्रा –परव्यादा' पर–श्रेष्ठ विशेषेण अदन्तीति 'कर्मणोऽण' (सिद्ध० ५–१–७२) १० ।
धनिवरकुविन्दावासा –परावाया , आवाय'–कुविन्दशाला ११ ।
सुभिक्षे कणा –परव्राता प्रकृष्टसमूहा· १२ ।
ग्रीष्मजलधितटा –परवाता', वात –वायु १३ ।
धूर्ता'–परव्याचाः, 'व्यचत् व्याजीकरणे'(सिद्ध० धा० ) व्यचन व्याच –वचनम् १४ ।
दुर्नयसत्त्वाः–परापाया', अपायः–अनर्थ· १५ ।
धार्मिकचित्ता धर्मे–परवादा , 'वद स्थैर्ये' ( सिद्ध० धा० ) प्रकृष्टस्थैर्या· १६ ।
वेदविद –परवाका वाक्–ऋग् यजु समूहात्मक वाक्यम् १७ ।
दयालु –परपाता, परान् पातीति शीलार्थे तृन् १८ ।
अशुभवेला परपाता, पात क्रान्तिसाम्यादि १९ ।
पट –परव्याता, 'व्येंग् सवरणे' (सिद्ध० धा० ) पर व्ययति–आच्छादयतीति तृन् २० ।
महासुभट –परपायाः, पररक्षकशस्त्र २१ ।
असती–परव्यागा , प्रकृष्टविरुद्धापराधा २२ ।
सुतन्तुवाय –परवाता, 'वेग् तन्तुसन्ताने' (सिद्ध० धा०) प्रकृष्टं वयतीति तृन् २३ ।
महावाता–( परवाता ? ), 'वाकृ गतौ ( गतिगन्धयोः? )' ( सिद्ध० धा० ) तृन् २४ ।
प्रावृषि यवास –परपाता, 'पैं ( ओवैं ) शोषणे' ( सिद्ध० धा० ) तृन् २५ ।
मद्यव्यसनी–परपाता, प्रकृष्ट पिबतीति तृन् २६ ।
अन्त्याब्धिस्थितिः–परव्यापा, प्रकृष्टविस्तारा २७ ।
मत्स्यसङ्कुलतडागा –परवाका , वकसमूहो वाकम् २८ ।
अनुकूलपवना पोता –परव्याया , 'व्यी गतौ' ( सिद्ध० धा०) प्रकृष्टगमनाः २९ ।
अजापालगृहा –प्ररपाजाः, प्ररपन्तीत्यचि प्ररपा –अजा यत्र ३० ।
अब्धिमुखाः–पराबाया', प्रकृष्ट अपामाय –लाभो यत्र ३१ ।
परप्रार्थनापरमनस –परव्यजा , परेषु विशेषेण आजो–गतिर्येषाम् ३२ ।
नित्यदरिद्राः–परापाया , पर–दूरमपगतमयो–भाग्य येभ्यः ३३ ।
महाऽन्धय –परापाया , परा भृशार्थे परापा–भृशापाम् आयो येषु ३४ ।
हालिका –परवापा प्रकृष्टोप्तय· ३५ ।
वधका'–परपापाः ३६ ।
कुम्भकाराः–परापाकाः, आपाकः–मृद्भाण्डपाकस्थानम् ३७ ।
गिरिनदी–प्ररवापू (?) '(टुक्षु) रु(कु)कृ शब्दे' (सिद्ध धा०) अचि प्ररवा आपो यत्र ३८ ।

मरुभूः–परापाऽगा दूरमपगतवृक्षा ३९।

काश्मीरमही–परवाक्, वाक्–सरस्वती ४०।

सिद्धाः–परापाकाः, प्रकृष्टमपगतमकम्–अघ येभ्य: ४१।

महाद्रुमाः–परपादाः, पादाः–मूलानि ४२।

नृपस्थिति:–परवाक्, परान्–शत्रून् वाजति–अवक्षिपतीति क्विप् ४३।

शतपदी–परपाद्, बहुत्वात् प्रकृष्टाङ्घ्रिः ४४।

भेर्य:–परव्यावा 'डंड् (कुड् गुंड् घुड् ङुंड्) शब्दे' (सिद्ध० धा०) 'युवर्णवृदृवशरणगमृद्ग्रहः' (सिद्ध० ५–३–२८) इति अलि अवः–शब्द, परान् (अवान्–) शब्दान् व्ययति–आच्छादयतीति 'आतो डोऽह्वावाम' (सिद्ध० ५–१–७६) इति डे परव्योऽवो यासाम् ४५।

फलितशालय –परवाचा', वचा –शुकास्तत्समूहो वाचम् ४६।

मन्त्रिवरा'–परावापा', आवाप'–अरिचिन्तनम् ४७।

धूर्तमैत्री–परापाता, आपात –तत्काल' ४८।

त्रयः प्रथमनरका –परापाकाः, परेभ्य'–परमाधार्मिकेभ्य आप्यत इति परापम् अकं–दु:ख येषु ४९।

नृपकन्याः–परव्रायाः, 'व्रींग् वरणे' ( सिद्ध० धा० ) प्रकृष्टो व्रायो यासाम् ५०।

राजानः–परपायाः, पर' पायः–रक्षा येषाम् ५१।

याचका'–परव्याताः, 'अत सातत्यगमने' ( सिद्ध० धा० ) अतनम् आत', परेषु विशेषेण आतो येषाम् ५२।

सुगृहा –परव्याया', परेभ्यो विशिष्टा आया–ध्वजधूमादयो येषु ५३।

कुपिताः सुभटाः–परावापाः, परे–शत्रौ अवाप –प्राप्तिर्येषाम् ५४।

तृपिता –(परपाया ), पर–केवल पिबन्तीति परमते 'तन्व्यधी(ण्श्वसात )' (सिद्ध० ५–१–६४) इति णे परपाया ५५।

वनोद्देशा –परव्याया , प्रकृष्टो वीनामाय –आगमन येषु ५६।

वाज पक्ष–मुनि निस्वनेष्वपि वाज सर्पि वारि यज्ञा–ऽन्नेषु, पाक' शिशु–दैत्ययोरपि, पततीति 'वा ज्वलादि(दुनीभूग्रहास्तोर्ण )' ( सिद्ध० ५–१–६२ ) इति णे पात , पततीत्यचि पत –पक्षी, तत्समूह पातम्, व्याजोऽपदेशेऽपि, अगोऽघेऽपि, "अजश्छागे हरे विष्णौ, रघुजे वेधसि स्मरे' ( हैमेऽनेकार्थे का० २, श्लो० ८० ) उप्यतेऽस्मिन्निति वाप क्षेत्रेऽपि, पाप पापिष्ठेऽपि, अगः शैलसरीसृपा–ऽर्केष्वपि, पादोऽशु–तुर्यांशा–ऽङ्घ्रि पर्यन्ताद्रि–पूजास्वपि, आवाप पात–भेदा–ऽऽलवाल–प्रक्षेप–भाण्डपचन–वलयेष्वपि आपातः पातेऽपि, वको रक्षोभेद-श्रीद-शिव-मल्ली(-चकोटे)ष्वपि,

"पद स्थाने विभक्त्यन्ते, शब्दे वाक्यैकवस्तुनो ॥
त्राणे पादे पादचिह्ने, व्यवसाय–प्रदेशयो ।"

(हैमेऽनेकार्थे का० २, श्लो० २४१–२४२)। मङ्खमते पद्मं चरणन्यासा-ऽऽविद्धयो-रपि, पचा ओषधि शारकयो, पपा पित्र मेदसो:, व्रजोऽत्र गोष्ठ सेतु, व्रजा उत्कर्पणाय रज्जुवज्रपट्यादिनिक्षेपमार्ग प्रेरणाण्डे च, 'व्रज व्रजण मार्गणसंस्कारगत्यो' (सिद्ध० धा०) 'मार्गण संस्कारेऽपि' इत्यन्ये, एतयोरचि वज' व्रज', वदपचादिभ्योऽपि वद पच इत्यादि २७, चकादीना मता(पदा)र्थेना च यथायोग समूहार्थ् अणि वाक पादमित्यादि, एव १४९, तथा 'पा पं उवेग् (ओवे?) स्यग् वेग् 'पद व्यक्तायां वाचि' (सिद्ध० धा०) कपटमते 'पद स्थैर्ये' अच रक्षणादि १९ अर्थेषु, 'अक अग कुटिल(लाया) गतौ' (सिद्ध० धा०) 'वज व्रज अयि वयि पयि पदिन् गतौ' (सिद्ध० धा०) 'वाकृ गति-गन्धनयो.' (सिद्ध० धा०) 'वाकृ प्रजन–कान्त्य–ऽसन खादनेषु (च)' (सिद्ध० धा०) अन्ये असनस्थानेऽशनमाहु, 'पीङ्च् पाने' (सिद्ध० धा०) 'श्रीङ्च् वरणे' (सिद्ध० धा०) 'पतण् गतौ वा' (सिद्ध० धा०) एपा घञि पाय वा इत्यादि ४४, 'इङ्-च गतौ' (सिद्ध० धा०) 'वातण् गतिसुखा ऽऽसेवनयो' 'सुखासेवनयो'[1] इत्येके एषा 'युऽवर्ण(दृदवशरणगमृद्ग्रह)' (सिद्ध० ५–३–२८) इत्यलि अय' वात 'वचण् वदि-(विदौ)ण भाषणे' (सिद्ध० धा०) 'सदेशने' इत्येके, 'आप्लृण् लम्भने' (सिद्ध० धा०) एपा युजादित्वात् णिजभावपक्षे घञि वाकादि 'व्ययण् वित्तसमुत्सर्गे' (सिद्ध० धा०) 'गतौ' इत्येके, पदिण्(दणि?) गतौ, (सिद्ध० धा०) अनयोर्णिजनित्यत्वेऽनदन्तत्वेन घञि व्यायादि १४, 'व्रगृक् (व्यक्तायां वाचि)' (सिद्ध० धा०) 'वचङ् (भाषणे)' (सिद्ध० धा०) वक्तीतिशील क्विपि वाक् २ ओवे 'वाकृ गतिगन्धने(?न यो)' (सिद्ध० धा०) तृनि वाता २ पात्याद्यादन्तससकात् 'तन्व्यधी०' (सिद्ध० ५–१–६४) इति णे पायादि ७ 'अज गतौ' अद् अत् आप् अक् अग् णिचोऽनित्यत्वे वा ण, एपा क्विपि अवाज इत्यादि १०, वेग् डे परवः १९ अर्थेष्ववधातोरचि अव, परश्चासाववश्च पराव, पर पिबतीति क्विपि परपा, एव पात्याद्यादन्तैरपि अग्रे आयादि योज्यम् २८, अद्वर्जाजादिभ्योऽयाऽवोऽश्वाऽविअजातादि (?) २९, आङ् पूर्वपात्यादिवदपचादिसकर्मधातुभ्य 'कर्मणोऽण्' (सिद्ध० ५–१–७२) इत्यणि परवाया. परवादा परपाचा इत्यादि ५६, पूर्वोक्त धातूना यथाप्राप्त णिचि शेषाणा तु सर्वेषा णिगि क्विपि पात् वात् इत्यादि, पाय वाय: इत्यादि ७८, एव ३६१, एपामाचष्टे इत्याद्यर्थे णिजि क्विपि पुन. ३६१, एव ७२२ प्रश्नोत्तराण्यत्र, प्रकर्षेण राजत इति क्विड्डे प्रर, अनेनापि सर्वरूपाणि रूपाष्टकवर्जं स्यु', तथा च १४३६, पूर्वोत्तरपदयोर्मिथो यथाऽर्हं परावर्त्ते विशेषखण्डने च न सङ्ख्या।



१ 'सुखसेवनयो' इति महोपाध्यायश्रीमेघविजयगणिप्रणीतायां चन्द्रप्रभायां (हैमकौमुद्यां) ४५९तमे पृष्ठे।

पण्डितगुणरत्नमुनिवरकृताः

# ॥ नमस्कार-प्रथम-पदा-ऽर्थाः ॥

(नमोऽर्हद्भ्यः) नमो अरिहताण । नमोऽर्हद्भ्य इति मुख्योऽर्थः ॥ १ ॥

(नमोऽरि-हन्तृभ्यः) अरय –वैरिणस्तेषा हन्तार अरिहन्तार –सर्ववैरिविनाशका., चक्रवर्तिन इत्यर्थ, तेभ्यो नमोऽस्तु इति तत्सेवकवचः ॥ २ ॥

(नमोऽरि-हन्तृभ्य') अथवा अरा विद्यन्ते यत्र तत् अरि–चक्र, तेन हन्तारो–वैरिविनाशका, चक्रवर्तिन इत्यर्थ, तेभ्यो नमोऽस्तु ॥ ३ ॥

(न-मोदा-ऽरि ह-त्राणम्) हो–जल तस्य त्राण–रक्षण, सरोवरमित्यर्थ', तद् वर्तते किम्भूतम्? मोदो–हर्ष तस्य अरिरिव अरि शोक, न विद्यते मोदारि –शोको यस्मात् तत् नमोदारि । नखादिगणान्नञोऽवस्थानम् । "प्रक्रिया नातिविस्तरा" (सारस्वतादौ) इत्यादिवत् ॥ ४ ॥

(नम ओ अरि-ह त्राणम्) अरि–चक्र हन्ति–गच्छति प्राप्नोति इति अरिह–चक्रधर, विष्णुम् । 'नम' इति क्रियापद पञ्चम्या मध्यमपुरुषैकवचने । किम्भूतं विष्णुम्? त्राण–शरणभूत, तत्सेवकानाम् । 'ओ' इति सम्बोधने ॥ ५ ॥

(नमोदलि ह-तानं) हो–जल तस्मात् तानो–विस्तार उत्पत्ति यस्य तत् हतानं–कमलम् । (तद्) वर्तते । किम्भूतम्? 'नमोदलि' नम'–प्रह्वीभाव. तेन उत्–प्रबला उद्धता अलिन –भ्रमरा यत्र एवविधम् । अनुस्वाराभावः चित्रत्वात्, रलयोरैक्य च तस्मादेव ॥६॥

(नमोदरि हन्ता-ऽऽनम्) नमो अरि० । नम–नमत् उदर नमोदर, नमोदर विद्यते यस्य तत् नमोदरि, बुभुक्षाक्रान्तोदर भिक्षाचरवृन्दमित्यर्थः । तद् वर्तते किम्भूतम्? 'हन्ताण' हन्तशब्देन भिक्षा उच्यते । देशीभाषया हन्त–भिक्षा, तया आन–जीवन यस्य (तत्) हन्तानम् ॥ ७ ॥

(न मोअ लिह-त्राणम्) मोअशब्देन प्रश्रवणम् । 'अणहारे मोअनिंबाइ' इति

---

१ 'नखादय' इति सिद्धहेमे (३–२–१२८)। २ 'अलय' इति ख–पाठ ।

३ श्रीदेवेन्द्रसूरिकृतस्य प्रत्याख्यानभाष्यस्य पञ्चदशगाथायाश्चतुर्थ चरणमिदम् । सम्पूर्णा गाथा तच्छाया चैवम्—

"खाइमे भत्तोसफलाइ साइमे सुंठिजीरअजमाइ ।
महु-गुड-तंबोलाइ, अणाहारे मोअनिंबाइ ॥"
खादिमे भक्तोषफलादि स्वादिमे शुण्ठिजीरकाजाजादि ।
मधु गुड ताम्बूलादि अनाहारे प्रश्रवणनिम्बादि ॥

प्रवचनस्य लिट्-पानकारी । 'ऊिलीँक् आस्वादने' (सिद्ध० धा०) तस्यैवंविधकर्तुरपि त्राण-शरणं न स्यात्। ज्ञानं विनेत्युपस्कारः। "सोपस्काराणि सूत्राणि भवन्ति" इति न्यायः ॥ ८ ॥

(न मोफलि हन्ता-ऽऽनम्) मोफलिः-घायम । 'स्वराणां स्वराः' (सिद्ध० ८-४-२३८) इत्यकारः। तस्य हन्ता-घातकः, तस्य आन-जीवनं न स्यात्। लोके हि एव कवि -वायसस्य भक्षकश्चिरजीवी स्यात्। तत्रायं अर्थो न समर्थः। तस्य हननेऽपि अधिकं जीवनं नैवेत्यर्थः ॥ ९ ॥

(न-मोदा ऽऽरि भ-त्राणम्) 'हताणं' भानि-नक्षत्राणि तेषां त्राणं-रक्षणं यस्य, सर्वनक्षत्रत्राता, चन्द्रः इत्यर्थः। 'पश्यत' इति क्रियाऽध्याहारः। चन्द्रं किम्भूतम्? 'नमोदारि' नो-बुद्धिः मोदो-हर्षः आरः-प्रापणम्, आरो विद्यते यस्य स आरी, बुद्धिमोदयोः आरी। शुभे चन्द्रे हि शुभा बुद्धिः हर्षश्च प्राप्यते। 'आरि' इत्यत्रानुस्वाराभावो न दोषाय, चित्रत्वात्। 'खघथधभां हः' (सिद्ध० ८-१-१८७) इत्यादौ भकारस्य हकारः क्वचित् आदावपि भवतीति वचनात्, बाहुलकाच्च ॥ १० ॥

(न मोदा-ऽर्हं त्राणं) त्राणं-सत्पुरुषशरणं वर्तते। किम्भूतम्? 'नमोदार्हं' नो-ज्ञानं मोदो-हर्षः तयोः अर्हं-योग्यम् ॥ ११ ॥

(नृ मोदर्हं तानम्) तानं-वस्त्रम्। लोके हि तानकयोगाद् वस्त्रनिष्पत्तिः। कारणे कार्योपचारात् तानं-वस्त्रम्। किम्भूतम्? 'नमो अरिह' नृणां-मनुष्याणां मा-शोभा, तस्याः उदर्हं-भृशं योग्यम्, मनुजशोभाकारि इत्यर्थः ॥ १२ ॥

(नमोदरी हन्त आ-नम्) 'हन्त' इति खेदे। नमं-नमत् कृशम् उदरं यस्याः सा नमोदरी-कृशोदरी, स्त्री इत्यर्थः। सा 'आनं' आ-समन्तात् न-बन्धनम्। स्त्रियः सर्वत्र बन्धनरूपा इति ॥ १३ ॥

(नम अर्हदाज्ञाम्) 'अरिहताणं' अर्हदाज्ञां प्रति नम-प्रह्वीभवेति शिष्यस्य कथनम् ॥ १४ ॥

(न मोपरि हन्ता) म-शिवं। 'शिव'शब्देन मोक्षो ज्ञेयः। तस्य उपरि हन्ता-गन्ता न वर्तते कश्चित् जीवः, मुक्तेरुपरि अलोकसद्भावेन कस्यापि गमनाभावात्। 'हन्ता' इत्यत्र 'हनक् हिंसागत्योः' (सिद्ध० धा०) इति गत्यर्थः ॥ १५ ॥

(न म उअ इह अ तानम्) इह-जगति अ-परब्रह्म तस्य तानं-विस्तारं त्वं 'उअ पश्य' (सिद्ध० ८-२-२११)। सर्वस्मिन् जगति ब्रह्मैवास्तीति वेदान्तिमतम्। न मः-

१ 'भक्षिक' इति क-पाठः। २ 'बाहुलकाद् वा' इति ख-पाठः। ३ 'गमनं नास्ति' इति ख-पाठः।
४ उअ पश्येत्यस्यार्थे श्रीहेमचन्द्रसूरिभिः प्राकृतव्याकरणस्य स्वोपज्ञवृत्तौ निर्दिष्टा गाथा तच्छाया च यथा—
"उअ निच्चलनिप्फंदा भिसिणीपत्तम्मि रेहइ बलाआ। निम्मल-मरगय-भायण-परिट्ठिआ सङ्ख-सुत्ति व्व ॥"
पश्य निश्चलनिष्पन्दा बिसिनीपात्रे राजति बलाका। निर्मलमरकतभाजनपरिस्थिता शङ्खशुक्तिरिव ॥

विधाता, "मश्चन्द्रे (च) विधौ शिवे" (श्रीसुधाकलशप्रणीतायामेकाक्षरनाममालिकाया श्लो० ३४), विधाता–जगत्कर्ता कोऽपि तन्मते न वर्तते इत्यर्थः ॥ १६ ॥

(न मा ऊ अ-रि हा-ऽतानम्) न विद्यते रा–द्रव्य यस्य तत् अरि, निर्द्रव्यं कुलमित्यर्थः । तत् किम्भूतम् ? 'हताण' हो–निवास तस्य अतानं–लाघव यस्य तत् । निर्धनस्य गृहलाघवं स्यात् । तानो–विस्तार', अतान–लाघवम् । 'न मा' इति निषेधद्वयं प्रकृतमर्थं ब्रूते । 'ऊ' इति पूरणे ॥ १७ ॥

(नमोत्परिघं ता-ऽऽ-नम्) त'–तस्कर तस्य आ–समन्तात् नं–बन्धनम् । किम्भूतम् ? 'नमोत्परिघ' नमन्–आरत परतोऽपि द्वारादिषु मिलन् उत्–प्रबल परिघ'–अर्गला यत्र तदेव चौरबन्धन स्यात् ॥ १८ ॥

(न मा ऊ अरि-ह् सन्तानम्) अरी–प्राप्नुवन् हकारो यत्र । एतावता सकारः तस्मात् अन्तान इति योज्यते । तदा स(सा ?)न्तान इति स्यात् । तत सन्तान मा–लक्ष्मी' च ऊ'–रक्षणं न स्यात्, दुर्गतिपातत इति ॥ १९ ॥

(नमोऽर्हद्भ्यः) अर्हन्त –सामान्यकेवलिन तेभ्यो नम' ॥ २० ॥

(नमोऽर्हद्भ्यः) अर्हद्भ्य –पूज्येभ्यो मातापित्रादिभ्यो नम ॥ २१ ॥[२]

(नं ओ अर्हन्त अत ण) 'ओ' इति सम्बोधने । न–बुद्धिम् अर्हन्त–प्राप्नुवन्त बुद्धिनिधान मन्त्रिणम् । 'अत सातत्यगमने' (सिद्ध० धा०) । अत–जानीहि । 'गत्यर्था ज्ञानार्था.' इति । 'स्वराणा स्वरा ' (सिद्ध० ८–४–२३८) इत्याकार । 'ण' वाक्यालङ्कारे ॥ २२ ॥

(नमोऽर्हतः) अर्हत –स्तुत्यान् सत्पुरुषान् नम , स्तुग्–द्विषार्ह शतृ, शत्रु स्तुत्ये इति ॥ २३ ॥

(न अर्हतः उअ) नं–ज्ञानम् अर्हत'–प्राप्तान् श्रुतकेवलिन । 'उअ पश्य' (सिद्ध० ८–२–२११) ॥ २४ ॥

(न-मा-ऊ-अरिहं ता अण) न–ज्ञान तस्य मा–प्रामाण्यम् । ऊ'–धारण तस्य अरिह–योग्य । ज्ञानप्रामाण्यवादिन जन त्व अण–वद । 'अण रण( वण-व्रण वण भण-भ्रण मण-धण-ध्वण-ध्रण कण क्वण-चण शब्दे )' ( सिद्ध० धा० ) इति दण्डकधातु' । ता–तावत् प्रक्रमे । अन्तेऽनुस्वार प्राकृतत्वात् ॥ २५ ॥

(नमः अर्हा-ऽन्त-अण) अर्हः–प्राप्तोऽन्तो यै । एवंविधा 'अण' त्ति अनन्तानुबन्धिनो यस्य तम्, पदैकदेशे पदसमुदायोपचारात् । सम्यग्दृष्टिपुरुष क्षायिकसम्यक्त्ववन्त प्रति नम ॥ २६ ॥

(नम उत-लिह् त्राण) त्राणं–भोजनभाजनमण्डनयोग्यं वस्तु, त नम–अन्तर्भूतणि-

१ 'पितृप्रभृतिभ्य ' इति ख–पाठ । २ अत्र पूर्वापरीभाव ख पुस्तके ।

प्रश्नवणस्य लिह्-पानकारी । 'लिहीक् आस्वादने' (सिद्ध० धा०) तत्कैवविधकदर्थ्यु-रपि प्राण-शरण न स्यात् । ज्ञान धिनेत्युपस्कार' । "सोपस्कराणि सूत्राणि भवन्ति" इति न्याय ॥ ८ ॥

(न मोकलि हन्ता ऽऽनम्) मोकलि -वायस' । 'स्वराणा स्वरा ' (सिद्ध० ८-४-२३८) इत्यकारः । तस्य हन्ता-घातक , तस्य आन-जीवन न स्यात् । लोके हि एवं कश्चिः-वाय-सस्य भक्षकश्चिरजीवी स्यात् । तन्नाय अर्थो न समर्थ । तस्य हननेऽपि अधिकं जीवनं नैवेत्यर्थ ॥ ९ ॥

(न-मोदा ऽऽरि भ-त्राणम्) 'हताण' भानि-नक्षत्राणि तेषा त्राण-रक्षणं यस्य, सर्वन-क्षत्रत्राता, चन्द्र' इत्यर्थ । 'पश्यत' इति क्रियाऽध्याहार । चन्द्र किम्भूतम्? 'नमोदारि' नो-बुद्धि मोदो-हर्ष आर -प्रापणम् , आरो विद्यते यस्य स आरी, बुद्धिमोदयो आरी । शुभे चन्द्रे हि शुभा बुद्धि हर्षश्च प्राप्यते । 'आरि' इत्यत्रानुस्वाराभावो न दोषाय, चित्र-त्वात् । 'ख घ थ ध भा ह ' (सिद्ध० ८-१-१८७) इत्यादौ भकारस्य हकार क्वचित् आदावपि भवतीति वचनात्, बाहुलकाच्च ॥ १० ॥

(न मोदा-ऽर्ह त्राण) त्राण-सत्पुरुषशरण वर्तते । किम्भूतम्? 'नमोदार्ह' नो-ज्ञानं मोदो-हर्ष तयो अर्ह-योग्यम् ॥ ११ ॥

(नृ मोदर्ह तानम्) तान-वस्त्रम् । लोके हि तानकयोगाद् वस्त्रनिष्पत्ति । कारणे कार्योपचारात् तान-वस्त्रम् । किम्भूतम्? 'नमो अरिह' नृणा-मनुष्याणा मा-शोभा, तस्या उदर्ह-भृश योग्यम्, मनुजशोभाकारि इत्यर्थ ॥ १२ ॥

(नमोदरी हन्त आ-नम्) 'हन्त' इति खेदे । नम-नमत् कृशम् उदर यस्या सा नमो-दरी-कृशोदरी, स्त्री इत्यर्थ । सा 'आन' आ-समन्तात् न-बन्धनम् । स्त्रिय सर्वत्र बन्धनरूपा इति ॥ १३ ॥

(नम अर्हदाज्ञाम्) 'अरिहताण' अर्हदाज्ञा प्रति नम-प्रह्वीभवेति शिष्यस्य कथ-नम् ॥ १४ ॥

(न मोपरि हन्ता) म -शिव । 'शिव'शब्देन मोक्षो ज्ञेय । तस्य उपरि हन्ता-गन्ता न वर्तते कश्चित् जीव', मुक्तेरुपरि अलोकसद्भावेन कस्यापि गमनाभावात्[3] । 'हन्ता' इत्यत्र 'हनक् हिंसा गत्यो ' (सिद्ध० धा० ) इति गत्यर्थ ॥ १५ ॥

(न म उअ इह अ तानम्) इह-जगति अ-परब्रह्म तस्य तान-विस्तार त्व 'उअ[4] पश्य' (सिद्ध० ८-२-२११ ) । सर्वस्मिन् जगति ब्रह्मैवास्तीति वेदान्तिमतम् । न मः-

१ 'भक्तिक' इति क-पाठ । २ 'बाहुलकाद् वा' इति ख-पाठ । ३ 'गमन नास्ति' इति ख-पाठ ।
४ उअ पश्येत्यसार्थे श्रीहेमचन्द्रसूरिभि प्राकृतव्याकरणस्य स्वोपज्ञवृत्तौ निर्दिष्टा गाथा तच्छाया च यथा—
"उअ निच्चलनिप्फदा भिसिणीपत्तम्मि रेहइ बलाआ । निम्मल-मरगय-भायण-परिट्ठिआ सङ्ख-सुत्ति व्व ॥"
पश्य निश्चलनि स्पन्दा बिसिनीपात्रे राजति बलाका । निर्मलमरकतभाजनपरिस्थिता शङ्खशुक्तिरिव ॥

विधाता, "मश्चन्द्रे (च) विधौ शिवे" ( श्रीसुधाकलशप्रणीतायामेकाक्षरनाममालिकाया श्लो० ३४ ), विधाता–जगत्कर्ता कोऽपि तन्मते न वर्तते इत्यर्थः ॥ १६ ॥

(न मा ऊ अ-रि ह्रा-ऽतानम्) न विद्यते रा–द्रव्यं यस्य तत् अरि, निर्द्रव्यं कुलमित्यर्थः । तत् किम्भूतम् ? 'हताणं' हो–निवास. तस्य अतानं–लाघव यस्य तत् । निर्धनस्य गृहलाघवं स्यात् । तानो–विस्तार , अतानं–लाघवम् । 'न मा' इति निषेधद्वयं प्रकृतमर्थं ब्रूते । 'ऊ' इति पूरणे ॥ १७ ॥

(नमोत्परिघं ता-ऽऽ-नम्) त'–तस्कर' तस्य आ–समन्तात् नं–बन्धनम् । किम्भूतम् ? 'नमोत्परिघं' नमन्–आरत. परतोऽपि द्वारादिषु मिलन् उत्–प्रबल परिघ –अर्गला यत्र तदेव चौरबन्धनं स्यात् ॥ १८ ॥

(न मा ऊ अरि-ह् सन्तानम्) अरी–प्राप्नुवन् हकारो यत्र । एतावता सकार' तस्मात् अन्तानं इति योज्यते । तदा स(सा ?)न्तान इति स्यात् । तत सन्तान मा–लक्ष्मीः च ऊ.–रक्षण न स्यात्, दुर्गतिपातत इति ॥ १९ ॥

(नमोऽर्हद्भ्यः) अर्हन्त –सामान्यकेवलिन तेभ्यो नम' ॥ २० ॥

(नमोऽर्हद्भ्यः ) अर्हद्भ्य –पूज्येभ्यो मातापित्रादिभ्यो नम ॥ २१ ॥[2]

(न ओ अर्हन्तं अत णं) 'ओ' इति सम्बोधने । न–बुद्धिम् अर्हन्त–प्राप्नुवन्त बुद्धिनिधानं मन्त्रिणम् । 'अत सातत्यगमने' (सिद्ध० धा०) । अत–जानीहि । 'गत्यर्था ज्ञानार्थाः' इति । 'स्वराणा स्वरा ' (सिद्ध० ८–४–२३८) इत्याकार । 'ण' वाक्यालङ्कारे ॥ २२ ॥

(नमोऽर्हतः) अर्हत –स्तुत्यान् सत्पुरुषान् नम , स्तुग्–द्विषार्ह शतृ, शत्रु' स्तुत्ये इति ॥ २३ ॥

(न अर्हतः उअ) नं–ज्ञानम् अर्हत'–प्राप्तान् श्रुतकेवलिन । 'उअ पश्य' (सिद्ध० ८–२–२११) ॥ २४ ॥

(न-मा-ऊ-अरिह् ता अण) न–ज्ञान तस्य मा–प्रामाण्यम् । ऊ –धारण तस्य अरिह–योग्य । ज्ञानप्रामाण्यवादिन जन त्व अण–वद । 'अण रण( वण-व्रण वण भण-भ्रण मण-धण-ध्वण-ध्रण कण क्वण-चण शब्दे )' ( सिद्ध० धा० ) इति दण्डकधातु' । ता–तावत् प्रक्रमे । अन्तेऽनुस्वार प्राकृतत्वात् ॥ २५ ॥

(नमः अर्हा-ऽन्त-अण) अर्ह –प्राप्तोऽन्तो यै । एवविधा 'अण' त्ति अनन्तानुबन्धिनो यस्य तम्, पदैकदेशे पदसमुदायोपचारात् । सम्यग्दृष्टिपुरुष क्षायिकसम्यक्त्ववन्त प्रति नम ॥ २६ ॥

(नम उत-लिह् त्राण) त्राणं–भोजनभाजनमण्डनयोग्यं वस्तु, त नम–अन्तर्भूतणि-

---

१ 'पितृप्रभृतिभ्य ' इति ख–पाठ । २ अत्र पूर्वापरीभाव ख पुस्तके ।

गर्यत्वात् महागुरु, गण्डयेति भोजनकारिवच' । तत किम्भूतम्? इतं-सम्यक् सिद्धं-भोजन यस्मात् (तत्) ॥ २७ ॥

(नमोको ऽर्हं ताणंम्) ताणं-तृणसमूहो वर्तते । किम्भूतम्? नमं-नमत् कुटीरभावं यत् ओको-गृह तस्यार्हं' तृणराच्छाद्यते गेहमिति ॥ २८ ॥

(न मोदाऽ-रि-ह तृणम्) तृण वर्तते । किम्भूतम्? 'मोदारिह' मोदो-हर्षः तत्प्रधाना अरयस्तान् हन्ति-हिनस्ति मोदारिहम् । 'न' इति निषेधे । तृणमुखास्ते वैरिणो जीवन्तीत्यर्थ ॥ २९ ॥

(न-मोदा-ऽरि हन्त ऋणम्) ऋण वर्तते । 'हन्त' इति खेदे । किम्भूतम्? 'नमोदारि' न-बुद्धि मोदो-हर्ष तस्य अरि-वैरिभूत वर्तते । ऋणे सति बुद्धि-हर्षौ नश्यत इत्यर्थ ॥ ३० ॥

(न मोऽरिभा-ऽनः ण) अरिभ-रिपुनक्षत्रं तत्र अतो-गमनं यस्य स' । 'अत सातत्य गमने' (सिद्ध० धा०) । एवविधो म-चन्द्र । नं-बन्धनं, विग्रहमित्यर्थ तम् । "णकारो निष्फले प्रकटे च" (   ) इति वचनात् ण-निष्फलम् । करोतीत्यध्याहार । "अरिहन्ताग्रे प्रथमैकवचनस्य व्यत्ययोऽप्यासाम्" (  ) इति वचनादपभ्रंशापेक्षया 'स्यम् जस् शसा-लुक्' (सिद्ध० ८-४-३४४) इति लुक् । एवमन्यत्रापि ज्ञेयम् ॥३१॥

(न मोऽरि-भ आकः अ-ण) भशब्देन राशिरप्युच्यते, भवनमपि, ततो अरिभं-रिपुभवनम् । यदा म-चन्द्रो न आक-न प्राप्त तदा अण-सफल, कार्यं स्यादिति शेष' । षष्ठभवने चन्द्रस्त्याज्य इत्यर्थ ॥ ३२ ॥

(नमोदरि-ह ता अनः) ता-तावत् अनः-शकट वर्तते । किम्भूतम्? 'नमो अरिहं' नमोदरिह नम-नमत् नीचैर्भवत् पुन उत्-उच्चैर्भवत् एवविध यत् अरि-चक्र ताभ्या हन्ति-गच्छति । शकट हि चक्राभ्या चलतीति ॥ ३३ ॥

(न मो-ऽरि-हन्ता ण) म-ईश्वरो वर्तते । किम्भूत? 'अरिहन्ता' अर-शीघ्रम् इ'-काम तस्य हन्ता, 'ण' अलङ्कारे ॥ ३४ ॥

(न ओजोऽर्हं ता-ऽणः) ता-शोभा तत्प्रधानोऽण-शब्दः साधुशब्दो यश । 'न ओजोऽर्हं' ओजो-बल तस्य योग्य न, बलेन यशो न स्यादित्यर्थ । मकारोऽलाक्षणिक । 'अणं' इत्यत्र 'लिङ्गमतन्त्र' (सिद्ध० ८-४-४४५) इति क्लीबत्वेन न दोष ॥ ३५ ॥

(नामूः अरमिभा-ऽन्ता-ऽणः) अरम्-अत्यर्थम् । इभान्त-हस्तिविनाशी सिंहः तस्य अण-शब्द', सिंहनाद इत्यर्थ । त त्व अय-प्राप्नुहि । इति सुभटस्योच्यते । यतो अमूः बन्धन न स्यात् । 'स्वराणा स्वरा:' (सिद्ध० ८-४-२३८) इत्योकार ॥ ३६ ॥

---

१ 'अय'धातोरात्मनेपदित्वात् चिन्त्योऽय प्रयोग ।

(नमोऽजारि-हन्तृभ्यः) "अजश्छागे हरे विष्णौ रघुजे वेधसि स्मरे" (हैमे का० २, श्लो० ८०) इत्यनेकार्थवचनात् अज -ईश्वर. सोऽरिर्यस्य सः अजारि.-कन्दर्प., तस्य हन्तृभ्यो-नीरागेभ्यो नमः ॥ ३७ ॥

(न मा ओ ! अ-लिहं त्राणम्) कस्यचिद् धनवतो धर्मपराङ्मुखस्योच्यते । 'लिहींक् आस्वादने' (सिद्ध० धा०) लिहन लिह. बाहुलकाद् भावे क' । न विद्यते लिहो यस्य (तद्) अलिहम्-अभक्ष्यत्वं अज-क्षिप, त्यजेत्यर्थः । अवतेर्वृद्ध्यर्थात् क्विपि । औस्त-स्यामन्त्रणे हे ओ ! धनवृद्ध ! मा-लक्ष्मीः त्राणं न भवतीति, विरतिरेव त्राण स्यादिति अभक्ष्यार्थ त्यजेत्यर्थ ॥ ३८ ॥

(न मोचः अज-लिह्-तानाम्) अज -छाग' तं लिहन्ति भक्षयन्तीति अजलिहाः । एव-विधास्ताः-तस्करास्तेषा मोचो-मोक्षो न स्यात् । [1]ते कर्मभिः न मुच्यन्ते इत्यर्थ. । मोचन मोच इति णिगन्तादच् ॥ ३९ ॥

(न मोचा लिह्-ता न) मोचा-कदली वर्तते । किम्भूता ? लिहो-भोज्य तस्य ता-शोभा यस्या. सा । भोज्ये सारभूता । न नेति निषेधद्वयं प्रकृतार्थम् ॥ ४० ॥

(न मा अर्हा-ऽन्ता णं) अर्हा-पूजा तस्या अन्तो-विनाशो यस्या सा अर्हान्ता । ईदृशी मा-लक्ष्मी' न भवति । लक्ष्मी. सर्वत्र पूजा प्राप्नोतीत्यर्थ । [2]'णं' अलङ्कृतौ ॥ ४१ ॥

(न मोऽजा-ऽरि-हन्ता न) भातीति म' 'क्वचिड्' (सिद्ध० ५-१-१७१) प्रमाणवेदी पुरुष । किम्भूत. ? अज.-परमात्मा तस्य अरि -निषेधक , प्रतिवादीति यावत्, तस्य हन्ता-निवारक । परमेश्वर यो न मन्यते त निवारयति प्रमाणवेत्ता पुरुषः, सर्वज्ञ स्थाप-यतीत्यर्थ । नञ्द्वय प्रकृत्यर्थे ॥ ४२ ॥

(नमोऽजा-ऽर्ह-ता-अणं) अज -सर्वज्ञ तस्य अर्हः-पूजा तस्य ता-शोभा अणति-वदति उपदिशति य. त पुरुष (प्रति) नमोऽस्तु । पूजास्थापक पूजार्ह' स्यादित्यर्थ. ॥ ४३ ॥

( न मोऽर्हा-ऽन्ता-ऽणः )

"अन्त' स्वरूपे निकटे, प्रान्ते निश्चय-नाशयो' ।
अवयवेऽप्यथाऽर्हन् स्यात्, पूज्ये तीर्थकरेऽपि च ॥"

इति ( हैमे का० २, श्लो० १७१ ) वचनात् मः-शिवोऽस्ति किम्भूत ? 'अर्हान्ताणः' अर्ह-सर्वेषा योग्यम् अन्त -स्वरूप तस्य अण- उपदेष्टा । 'अण शब्दे' (सिद्ध० धा०) । "मश्चन्द्रे (च) विधौ शिवे" (सुधा० श्लो० ३४ ) इत्येकाक्षरनिघण्टुः । ईश्वर सर्वपदार्थ-यथास्थितवादी न स्यात्, तदुक्ततत्त्वव्यभिचारात् ॥ ४४ ॥

---

१ 'कर्ममुक्तिन स्यादित्यथ' इति ख-पाठ । २ 'अलङ्कारे' इति ख-पाठ ।

गर्धत्वात् महीगुर, मण्डयेति भोजनकारिवच: । तत् किम्भूतम्? व्रतं-सम्यक् किं-भोजन यस्मात् (तत्) ॥ २७ ॥

(नमोको-ऽर्ं तार्णम्) तार्णं-तृणसमूहो वर्तते । किम्भूतम्? नमं-नमत् कुटीरवार्यं यत् ओको-गृह तस्याहः तृणैराच्छाद्यते गेहमिति ॥ २८ ॥

(न मोदाऽ-रि-ह तृणम्) तृण वर्तते । किम्भूतम्? 'मोदारिहं' मोदो-हर्षः तत्प्रधाना अरयस्तान् हन्ति-हिनस्ति मोदारिहम् । 'न' इति निषेधे । तृणमुखास्ते वैरिणो जीवन्तीत्यर्थ: ॥ २९ ॥

(न-मोदा-ऽरि हन्त ऋणम्) ऋण वर्तते । 'हन्त' इति खेदे । किम्भूतम्? 'नमोदारि' न-बुद्धि मोदो-हर्ष तस्य अरि -वैरिभूत वर्तते । ऋणे सति बुद्धि-हर्षौ नश्यत इत्यर्थ ॥ ३० ॥

(न मोऽरिभा-ऽतः ण) अरिभं-रिपुनक्षत्रं तत्र अतो-गमन यस्य स: । 'अत सातत्य गमने' (सिद्ध० धा०) । एवविधो म -चन्द्र । न-बन्धन, विग्रहमित्यर्थ: तम् । "णकारो निष्फले प्रकटे च" ( ) इति वचनात् ण-निष्फलम् । करोतीत्यध्याहार । "अरिहन्ताग्रे प्रथमैकवचनस्य व्यत्ययोऽप्यासाम्" ( ) इति वचनादपभ्रंशापेक्षया 'स्यम् जस् शसा लुक्' (सिद्ध० ८-४-३४४) इति लुक् । एवमन्यत्रापि ज्ञेयम् ॥३१॥

(न मोऽरि-भ आकः अ-ण) भशब्देन राशिरप्युच्यते, भवनमपि, ततो अरिभ-रिपुभवनम् । यदा म -चन्द्रो न आक -न प्राप्त तदा अण-सफल, कार्यं स्यादिति शेष: । षष्ठभवने चन्द्रस्त्याज्य इत्यर्थ ॥ ३२ ॥

(नमोदरि-हं ता अनः) ता-तावत् अनः-शकट वर्तते । किम्भूतम्? 'नमो अरिहं' नमोदरिह नम-नमत् नीचैर्भवत् पुन उत्-उच्चैर्भवत् एवविध यत् अरि-चक्र ताभ्या हन्ति-गच्छति । शकट हि चक्राभ्या चलतीति ॥ ३३ ॥

(न मो-ऽरि-हन्ता ण) म -ईश्वरो वर्तते । किम्भूत ? 'अरिहन्ता' अर-शीघ्रम् इ -काम. तस्य हन्ता, 'ण' अलङ्कारे ॥ ३४ ॥

(न ओजोऽर्हं ता-ऽणः) ता-शोभा तत्प्रधानोऽण -शब्दः साधुशब्दो यश । 'न ओजोऽर्हं' ओजो-बल तस्य योग्य न, बलेन यशो न स्यादित्यर्थ । मकारोऽलाक्षणिक । 'अणं' इत्यत्र 'लिङ्गमतन्त्र' (सिद्ध० ८-४-४४५) इति क्लीबत्वेन न दोष ॥ ३५ ॥

(नामूः अरमिभा-ऽन्ता-ऽणः) अरम्-अत्यर्थम् । इभान्त -हस्तिविनाशी सिंहः तस्य अण -शब्द , सिहनाद इत्यर्थ । त त्व अय-प्राप्नुहि । इति सुभटस्योच्यते । यतो अमूः बन्धन न स्यात् । 'स्वराणा स्वरा ' (सिद्ध० ८-४-२३८) इत्योकार ॥ ३६ ॥

---

१ 'अय'धातोरात्मनेपदित्वात् चिन्त्योऽय प्रयोग ।

तं अणति–वदति यः तं प्रज्ञापनादिसिद्धान्तवेदिन नमः–प्रणतोऽस्मीत्यर्थः। 'अवर्णो यश्रुतिः' (सिद्ध० ८–१–१८०) न यकारबाहुलकात् इति अगारिरित्यत्र ॥ ५४ ॥

(नमोऽर्हं त्वमत णम्) ण–ज्ञं पण्डित पुरुषं त्वम् अत–जानीहि। 'अत सातत्यगमने' (सिद्ध० धा०)। 'गत्यर्था ज्ञानार्था'। किम्भूतम्? नमोऽर्हं–प्रणामयोग्यम्॥५५॥

(न-म-उ अर्हदृणम्) 'अरिहताणं' अर्हन्–तीर्थकर' तस्य ऋण–कर्म तीर्थकरनामकर्मेत्यर्थ। किम्भूतम्? 'नमो' नो–ज्ञान म–शिव तयो' ऊः–प्राप्तिः यस्मात्[1]। यत् कर्मण्युदिते परमज्ञानं मोक्षश्च प्राप्यते एवेत्यर्थः ॥ ५६ ॥

(नमोत्तरीः हा-ऽन्ता) 'नमोत्तरी' नमा–नमन्ती उत्–ऊर्ध्वं गच्छन्ती एवविधा तरीः–नौः। किम्भूता? 'हान्ता' ह–जलं तस्य अन्तः–प्रान्तो यस्याः एवविधा न स्यात्। क्षण नमति क्षणाच्चोर्ध्वं याति तया नावा जलप्रान्तो न स्यात्, जलप्रान्ते न गम्यते इत्यर्थः ॥ ५७ ॥

(नृ मोऽरि ह ता-ऽऽनः) ना–पुरुष तस्य मो–मस्तक'। किम्भूत? 'हतानः' "हः शूलिनि करे नीरे" (सुधा० श्लो० ४५) इति हः–ईश्वर तस्य ता–शोभा ता आनयति–वर्धयति (इति) हतानः। नरमस्तको हि ईश्वरशोभाकर तदाभरण शिवस्य वर्तते। 'अरि' सम्बोधने ॥ ५८ ॥

(नम अज हता-ऽनम्) अज–विष्णुं नम–प्रह्वीभव। किम्भूतम्? 'हतान' हतः अनः–शकटदैत्यो येन तम्। 'इ जे राः पादपूरणे' (सिद्ध० ८–२–२१७) इति सूत्रात् इकारमुक्तो रेफ पादपूरणे ॥ ५९ ॥

*(न मा अजोऽरिहन्ता णम्) अजो–रघुतनय' अरिहन्ता–सर्ववैरिविनाशी अभूत्।* 'ण' अलङ्कारे। 'मा' 'न' इति निषेधद्वय प्रकृतार्थम् ॥ ६० ॥

(नृ-मोदं रह तानम्) 'नमो अरहंताण' अयमपि पाठोऽस्ति। ताना एकोनपञ्चाशत्। तानं–गीततान रह–जानीहि। 'रहुण् गतौ' (सिद्ध० धा०)। गत्यर्थाश्च ज्ञानार्थाः। तान किम्भूत? 'नृमोद' नृणा–पुरुषाणा मोदो यस्मात् ॥ ६१ ॥

(न मोचय अर्हदाज्ञाम्) अनेन पदेन अनुयोगचतुष्टय व्याख्यायते। अरहताण अर्हदाज्ञा न मोचय। मोचा–शाल्मली मोचा करोति मोचयति। मध्यमपुरुषैकवचने मोचयेति सिद्धम्। शाल्मलितुल्यामसारा जिनाज्ञा मा कुरु। तत्स्वरूपा[2] ता जानीहि। इति चरणकरणानुयोग ॥ ६२ ॥

(नमः अर्हन्नक त्राणम्) 'अरह' अर्हन्नकं–साधु त्राण–शरणभूत नमस्कुरु। पदैकदेशे पदसमुदायोपचारात् अरह अर्हन्नकम्[3]। इति धर्मकथानुयोग ॥ ६३ ॥

---

१ अनेन विग्रहेण 'नमो' इति पदस्य कर्मविशेषणत्वे सतीति, नपुसकत्वे ह्रस्वेन भाव्यम्।
२ 'तात्स्वरूपां' इति ख–पाठ। ३ 'अर्हन्नकः' इति क–पाठ।

(नमोऽजा-ऽरिह ता ऽण) अजा-छागः तेन, 'ऋक् गतौ' (सिद्ध० धा०) इत्यर्थि अजारी -छागवाहनो वह्निः शीलार्थे इन् । त 'हिंड गति वृद्ध्यो' (सिद्ध० धा०) इत्यवति-वर्धयतीति अजारिह -वह्निवर्धकोऽग्निहोत्री तं पुरुष नमोऽस्तु इत्युपहासः । तं किम्भूतम् ? 'ताण' ता-शोभाम् अणति ताण , यय अग्निहोत्रिण इत्यभिमानी ॥ ४५ ॥

(न मोचा अलि-हन् अत णं) "मोचा शाल्मलि-कदल्योर्मोचा शिग्रौ" इत्यनेकार्थे (हैम० का० २, श्लो० ७३) । मोचा-शाल्मली ता त्व न अत । 'अत सातत्यगमने' (सिद्ध० धा०) मा गच्छेति । यतः 'अलिहन्' अलीना-भ्रमराणा हन्-गमन णं निष्फलं वर्तते । 'हनक् हिंसागत्यो' (सिद्ध० धा०) त्रिचि रूपम् । भ्रमराणा भ्रमण निष्फल, सौरभरहित-त्वात् । ततस्त्व मा गच्छेति मित्रस्योक्तिः ॥ ४६ ॥

(नमोऽरि-हतेभ्यः) अरयो-वैरिणः अष्टविधकर्माणि । यदुक्त (आवश्यकनिर्युक्तौ गा० ९२० )—

"अट्ठविह पि अ कम्म अरिभूअ होइ सवजीवाण ।
त कम्ममरि हता अरिहता तेण वुच्चति ॥"[2]

इति तैर्हतेभ्य कर्मपीडितेभ्यो नमोऽस्तु । इति उपहासनमस्कार ॥ ४७ ॥[1]

(न मोच अर्हत्-त्राणम्) 'अरिह' अर्हन्-तीर्थकर तस्य त्राण-शरणं न मोचं-न मोच्यमिति ॥ ४८ ॥

(न मोच अर्हत्-त्राणम्) अर्हन्-तीर्थकर[3] तस्य त्राण-शरण न मोच्यम् ॥ ४९ ॥

(न मोच अरि ह-त्राणम्) अरि-अष्टविध कर्म हतवन्त ते अरिहा -सिद्धा तेषा त्राण शरण न मोच्यम् ॥ ५० ॥

(न मः मोदा-ऽरि-हतानाम्) मोदारि -शोकः तेन हताना-पीडिताना न म - शिव न स्यात् ॥ ५१ ॥

(न मोदोऽरि-हतानाम्) अरिहताना-बाह्यवैरिपीडिताना न मोद -हर्षो न स्यात् ॥५२॥

(नमः अरि हतेभ्यः) अरि इति अव्यय सम्बोधने । हतेभ्यो-निन्द्येभ्यो नम इत्यु-पहास्यम् ॥ ५३ ॥

(नमोऽगा-ऽरि-हा-ऽन्ता-ऽण) अगा-पर्वता तेषा अरिः-इन्द्र तस्य हो-निवासः स्वर्ग. तस्य अन्त.-स्वरूप, "अन्त स्वरूपे निकटे" इति (हैमे का० २, श्लो० १७१) वचनात्,

---

१ 'नमो० अरिभिर्हतानाम्-अष्टविधकर्मपीडितेभ्यो नम -उपहासनमस्कार ' इति ख-पाठ ।

२ छाया—

अष्टविधमपि च कर्म अरिभूत भवति सर्वजीवानाम् ।
त कर्मारिं हन्ति अरिहन्तारस्तेनोच्यन्ते ॥

३ 'जिन ' इति ख-पाठ ।

'य्वोः प्वय् व्यञ्जने लुक्' (सिद्ध० ४-४-१२१) इति यलोपे अरहन्ता । बन्दिमोक्षकरो-मन्त्रमण्यादिः पदार्थो दैत्यभयवारको भवति । 'ण' पूरणे ॥ ६९ ॥

(न-मोऽरहन् त्राणम्) 'न'शब्देन ज्ञानं तच्च पञ्चसङ्ख्यम् । एतावता नं पञ्चसङ्ख्याया मं-ज्ञानं यस्य स नमः-पञ्चमज्ञानवान् केवली । 'माङ्क् मान-शब्दयोः' (सिद्ध० धा०) । मीयते इति मं-ज्ञानम् । बाहुलकाद् भावे डप्रत्यये सिद्धम् । केवली किम्भूतः ? 'अरहन्' अरा-देवाः तान् हन्ति-गच्छति प्राप्नोति अरहन् । देवस्य सेव्य इत्यर्थः । त्राण-षट्काय-रक्षकश्च ॥ ७० ॥

(न-मा ऊ अ-र-हा-ऽन्तेभ्यः) अकार रियन्तीति डे अराः । 'रित् गतौ' अकारप्रापकाः । हकारोऽन्ते येषां ते हान्ताः, अकारादयो हकारान्ता वर्णा इत्यर्थः । 'नमो' नं-ज्ञानं मा-शब्दः 'माङ्क् मान-शब्दयोः' (सिद्ध० धा०) इति तयोः औः-अवगमनं भवति । अव-धातुरवगमनार्थेऽपि वर्तते । अवन ऊः भावे क्विप् । 'अरहताण' इत्यत्र चतुर्थी ज्ञेया । वर्णेभ्यो ज्ञानं शब्दावगमश्च स्यादित्यर्थः ॥ ७१ ॥

(नमोदरा-भक् त्राणम्) त्राणशब्देन बृहत्पूपिकोच्यते जैनमुनिभाषया । ये लोके मण्डका इति प्रसिद्धा ते साधूनां त्राणका इति । त्राणानां समूहो त्राणम् । समूहार्थे अण् । त्राणं किम्भूतम् ? नम-नमत् उदरं यस्याः सा नमोदरा-बुभुक्षा तां भनक्तीति क्विप् 'स्वराणां स्वराः' ( सिद्ध० ८-४-२३८ ) इत्यकारः ॥ ७२ ॥

(न मौक-रहः ता-ऽऽनः) "मूको दैत्याऽवागदीनेषु" इत्यनेकार्थसङ्ग्रहः (हैमे का० २, श्लो० ३० ) मूकानां समूहो मौकम् । 'षष्ठ्याः समूहे' ( सिद्ध० ६-२-९ ) इत्यण् । 'रह त्यागे' (सिद्ध० धा०) मौकं रहति मौकरहो न स्यात् । कः ? ता-लक्ष्मीं आनयतीति तानः । धनोपार्जकः दीनसमूहवर्जको न स्यात् । दीनसमूहं प्रीणयतीति स दीनैः सेव्यत इत्यर्थः ॥ ७३ ॥

(नमो-गा ण-रहन्तः) "णः प्रकटे निष्फले च प्रस्तुते ज्ञान-बन्धयोः" इति (सुधा०) एकाक्षरनाममाला(श्लो० २२)वचनात् णो-बन्धः, कर्मबन्ध इत्यर्थः । तं रहन्त -त्यजन्त पुरुषा 'नमोगाः' स्युः । नमः-नमस्कारं गच्छन्ति-प्राप्नुवन्तीति नमोगाः-नमस्काराहीः स्युः ॥ ७४ ॥

(न-मोचः ण-रहन्तः) णं-ज्ञानं रहन्तः-प्राप्नुवन्तः पुरुषाः 'नमोचः' स्युः । नमन्तीति डे नाः-प्रणामकारिणः तान् मोचयन्ति संसारात् नमोचः, णिगन्तात् क्विप् । 'रहु गतौ' (सिद्ध० धा०) रहन्त इत्यत्रानुस्वाराभावश्चित्रत्वात् ॥ ७५ ॥

(न मा ऊः अरहन्तः ण) 'णसि कौटिल्ये' (सिद्ध० धा०) नसनं नः-कौटिल्यम् । अर-हन्तः-अप्राप्नुवन्तः पुरुषाः ण-प्रकटं यथा स्यात् तथा अवन्ति-दीप्यन्ते इति क्विपि ऊः ।

१ नमो इति ख पाठः । २ 'अवनमो' इति ख-पाठः । ३ 'क्षरवचनात्' इति ख-पाठः ।

(न मोण-र-हन्ता क्षणम्) क्षधातोक्षमत्यये 'क्षणीक्षाम(क्षोम्बनुबन्धिकेभ्यः)' (सिद्ध० ४-२-७६) इति क्षणमयोगः। क्षण-क्षीण पुरुषं मोचा-शिग्रुः तस्य 'र'शब्देन रसो हन्ता-घातकोभवति। क्षयरोगी पुरुष शिग्रुरसेन नीरोगः स्यादिति तात्पर्यम्। पर्देकदेशे पदसमुदा-योपचारात् 'र'शब्देन रसः। नेयं स्वमतिकल्पना श्रीजिनप्रभसूरिरपि, 'पउमाभवासुपुज्जा' इत्यस्या गाथायां चतुरनुयोगीं व्याख्यानयद्भिरेवं व्याख्यातम्—"पउ इति पौषः। मा इति माघ । भ इति भाद्रपदः। तत्र अथ इति अवमरात्रे सतीत्यर्थः। वासु इति वसु-भिक्षं-दुर्भिक्षं स्यात् । पु इति पुहवी। ञोगो पुहवी सोवा तस्य ज्जा ज्यानि-हानिः स्यादित्यर्थ"। इति द्रव्यानुयोग ॥ ६४ ॥

(न मोऽलि-हन् त्राणम्) 'नमो अरिहंताण' अलि.-वृश्चिकराशि तत्र 'हनङ् हिंसा-गत्योः' (सिद्ध० धा०) हन्ति-गच्छतीति विचि अलिहन्-वृश्चिकराशिगतो मः-चन्द्रः त्राण-विपद्रक्षको न भवति। वृश्चिकराशौ चन्द्रस्य नीचत्वात् दौर्बल्यम्। इति गणिता-नुयोग ॥ ६५ ॥

(नमः अलि-हा-ऽन्तेभ्य) "अलिः सुरा-पुष्पलिहो" इति (हैमे अनेकार्थे का० २, श्लो० ४८०) वचनात् अलिः-सुरा ता जहाति अलिह्-सुरावर्जकम्। सुराया उपलक्षणत्वात् मासाद्यपि ग्राह्यम्। मद्यादिवर्जक अन्त -स्वरूप येषा तानि अलिहान्तानि-श्राद्धकुलानि तेभ्यो नमः-उद्यमो भवतु। श्राद्धकुलानि उदितानि सन्त्वित्यर्थः ॥ ६६ ॥

(नमः अ रे ह अताणम्) कश्चिच्छैवो वक्ति—ह-अहं रे-रामविषये नमो-नमस्कारम् अताण-अतनवम्, कृतवानित्यर्थ । 'र'शब्देन राम उच्यते ऐकाक्षरनाममालायाम्। अतनवमिति ह्यस्तन्युत्तमैकवचनम्। अकार पादपूरणे ॥ ६७ ॥

(नमः अ रे ह अताणम्) कश्चिज्जैनो वक्ति-अह रामे नम नातनवम् । अकारो निषेधे। "अ-मा नो-ना प्रतिषेधवाचका." इति माला ॥ ६८ ॥

(नमोऽर-भन्ता णम्) नमो अरहताण न-बन्धन। 'मींग्श् हिंसायां' (सिद्ध० धा०) मीनाति-हिनस्ति । डप्रत्यये नमो-बन्धच्छोटकः, बन्दिमोक्षकर स वर्तते। किम्भूत ? 'अरहन्ता' रो-नर , न र अरः-अमर्त्य , देव इत्यर्थ । अरान्-देवान् भनक्तीति अर-भन्-दैत्यः। तेभ्य 'तायृङ् सन्तान पालनयो ' (सिद्ध० धा०) तायते इति ताः क्विपि।

---

१ सम्पूर्णा गाथा तच्छाया चैवम्—

"पउमाभ-वासुपुज्जा, रत्ता ससि-पुप्फदंत ससिगोरा।
सुव्वय-नेमी काला, पासो मल्ली पियंगाभा॥"

पद्मप्रभ-वासुपूज्यौ रक्तौ चन्द्र(प्रभ)-पुष्पदन्तौ शशिगौरौ। सुव्रत-नेमी कालौ पार्श्वा मल्लि प्रियङ्ग्वाभ ॥

२ रलयोरैक्येन अरिस्थाने अलि । ३ सुधाकलशीयां (श्लो० ३७) प्रोक्त च—"रः कामे तीक्ष्णे वैश्वानरे नरे। रामे वज्रे च।"

'य्वोः प्वय् व्यञ्जने लुक्' (सिद्ध० ४-४-१२१) इति यलोपे अरहन्ता । वन्दिमोक्षकरो-मन्त्रमण्यादिः पदार्थो दैत्यभयवारको भवति । 'णं' पूरणे ॥ ६९ ॥

(न-मोऽरहन् त्राणम्) 'न'शब्देन ज्ञान तच्च पञ्चसङ्ख्यम् । एतावता नं पञ्चसङ्ख्याया मं-ज्ञान यस्य स नम -पञ्चमज्ञानवान् केवली । 'माङ्क् मान-शब्दयोः' (सिद्ध० धा०) । मीयते इति मं-ज्ञानम् । बाहुलकाद् भावे डप्रत्यये सिद्धम् । केवली किम्भूत' ? 'अरहन्' अरा-देवा॰ तान् हन्ति-गच्छति प्राप्नोति अरहन् । देवस्य सेव्य इत्यर्थ । त्राण-षट्काय-रक्षकश्च ॥ ७० ॥

(न-मा ऊ अ-र-हा-ऽन्तेभ्यः) अकार रियन्तीति डे अरा॰ । 'रित् गतौ' अकारप्रापका॰ । हकारोऽन्ते येषा ते हान्ता॰, अकारादयो हकारान्ता वर्णा इत्यर्थ । 'नमो' न-ज्ञानं मा-शब्दः 'माङ्क् मान-शब्दयो ' (सिद्ध० धा०) इति तयोः औः-अवगमनं भवति । अव-धातुरवगमनार्थेऽपि वर्तते । अवनं ऊः भावे क्विप् । 'अरहंताण' इत्यत्र चतुर्थी ज्ञेया । वर्णेभ्यो ज्ञानं शब्दावगमश्च स्यादित्यर्थ ॥ ७१ ॥

(नमोदरा-भक् त्राणम्) त्राणशब्देन बृहत्पूपिकोच्यते जैनमुनिभाषया । ये लोके मण्डका इति प्रसिद्धा ते साधूना त्राणका इति । त्राणाना समूहो त्राणम् । समूहार्थे अण् । त्राण किम्भूतम् ? नम-नमत् उदर यस्या सा नमोदरा-बुभुक्षा ता भनक्तीति क्विप् 'स्वराणा स्वरा॰' ( सिद्ध० ८-४-२३८ ) इत्यकार ॥ ७२ ॥

(न मौक-रहः ता-ऽऽनः) "मूको दैत्याऽवागदीनेषु" इत्यनेकार्थसङ्ग्रहः (हैमे का० २, श्लो० ३० ) मूकानां समूहो मौकम् । 'षष्ठ्या समूहे' ( सिद्ध० ६-२-९ ) इत्यण् । 'रह त्यागे' (सिद्ध० धा०) मौकं रहति मौकरहो न स्यात् । क ? ता-लक्ष्मीं आनयतीति तान॰ । धनोपार्जक दीनसमूहवर्जको न स्यात् । दीनसमूहं प्रीणयतीति स दीनै सेव्यत इत्यर्थ ॥ ७३ ॥

(नमो-गा ण-रहन्तः) "ण॰ प्रकटे निष्फले च प्रस्तुते ज्ञान बन्धयो " इति (सुधा०) एकाक्षरनाममाला(श्लो० २२)वचनात् णो-बन्ध , कर्मबन्ध इत्यर्थ॰ । त रहन्त -त्यजन्त पुरुषा 'नमोगा॰' स्यु । नम -नमस्कार गच्छन्ति-प्राप्नुवन्तीति नमोगा -नमस्कारार्हा॰ स्यु ॥ ७४ ॥

(न-मोचः ण-रहन्तः) ण-ज्ञानं रहन्त -प्राप्नुवन्त॰ पुरुषा॰ 'नमोचः' स्यु॰ । नमन्तीति डे ना॰-प्रणामकारिणः तान् मोचयन्ति ससारात् नमोच , णिगन्तात् क्विप् । 'रहु गतौ' (सिद्ध० धा०) रहन्त इत्यत्रानुस्वाराभावश्चित्रत्वात् ॥ ७५ ॥

(न मा ऊ अरहन्तः ण) 'णसि कौटिल्ये' (सिद्ध० धा०) नसनं नः-कौटिल्यम् । अर-हन्त -अप्राप्नुवन्त पुरुषा ण-प्रकट यथा स्यात् तथा अवन्ति-दीप्यन्ते इति क्विपि ऊ ।

१ नमो इति ख पाठः । २ 'अवनमो ' इति ख-पाठ । ३ 'क्षरवषमात्' इति ख-पाठ ।

(न मोण-र-हन्ता त्राणम्) क्षणातोऽप्रत्यये 'श्रस्थावाम(नोऽन्तरस्तिन्वोर्वा)' (सिद्ध० ४-२-७६) इति क्षणप्रयोगः। क्षण-क्षीण पुरुषं मोणः-शिग्रुः तस्य 'र'शब्देन रसो हन्ता-घातकोभवति। क्षयरोगी पुरुष शिग्रुरसेन नीरोग स्यादिति तात्पर्यम्। परैकदेशे समुदा-योपचारात् 'र'शब्देन रसः। नेयं स्वमतिकल्पना श्रीजिनप्रभसूरिरपि, 'पउमाभवासुपूज्जा' इत्यस्या गाथाया चतुरनुयोगीं व्याख्यानयद्भिरेव व्याख्यातम्—"प इति पौषः। मा इति माघ'। भ इति भाद्रपद.। तत्र अथ इति अवमरात्रे सतीत्यर्थ। अबु इति अबु-भिक्ष-दुर्भिक्ष स्यात्। पु इति पुहवी। लोगो पुहवी सोया तस्य ज्वा ज्यानि-हानिः स्यादित्यर्थ"। इति द्रव्यानुयोग ॥ ६४ ॥

(न मोऽलि-हन् त्राणम्) 'नमो अरिहताण' अलि-वृश्चिकराशिः तत्र 'हनंक् हिंसा-गत्यो' (सिद्ध० धा०) हन्ति-गच्छतीति क्विपि अलिहन्-वृश्चिकराशिगतो मः-चन्द्रः त्राण-विपद्रक्षको न भवति। वृश्चिकराशौ चन्द्रस्य नीचत्वाद् दौर्बल्यम्। इति गणिता-नुयोग ॥ ६५ ॥

(नमः अलि-हा-ऽन्तेभ्य.) "अलि' सुरा-पुष्पलिहो'" इति (हैमे अनेकार्थे का० २, श्लो० ४८०) वचनात् अलिः-सुरा ता जहाति अलिह्-सुरावर्जकम्। सुराया उपलक्षणत्वात् मासाद्यपि ग्राह्यम्। मद्यादिवर्जक अन्त.-स्वरूप येषा तानि अलिहान्तानि-श्राद्धकुलानि तेभ्यो नमः-उद्यमो भवतु। श्राद्धकुलानि उदितानि सन्त्वित्यर्थ' ॥ ६६ ॥

(नमः अ रे ह अताणम्) कश्चिच्छैवो वक्ति-ह-अह रे-रामविषये नमो-नमस्कारम् अताण-अतनवम्, कृतवानित्यर्थ। 'र'शब्देन राम उच्यते ऐकाक्षरनाममालायाम्। अतनवमिति ह्यस्तन्युत्तमैकवचनम्। अकार' पादपूरणे ॥ ६७ ॥

(नमः अ रे ह अताणम्) कश्चिज्जैनो वक्ति-अह रामे नमः नातनवम्। अकारो निषेधे। "अ-मा नो-ना प्रतिषेधवाचका." इति माला ॥ ६८ ॥

(नमोऽर-भन्ता णम्) नमो अरहताण न-बन्धन। 'मींग्श् हिंसायां' (सिद्ध० धा०) मीनाति-हिनस्ति। उप्रत्यये नमो-बन्धच्छोटक, बन्दिमोक्षकर स वर्तते। किम्भूत ? 'अरहन्ता' रो-नर, न र अर-अमर्त्य, देव इत्यर्थ। अरान्-देवान् भनक्तीति अर-भन्-दैत्यः। तेभ्य 'तायृङ् सन्तान-पालनयो' (सिद्ध० धा०) तायते इति ताः क्विपि।

१ सम्पूर्णा गाथा तच्छाया चैवम्—

"पउमाभ-वासुपूज्जा, रत्ता ससि-पुप्फदत ससिगोरा।
सु-वय-नेमी काला, पासो मल्ली पियगाभा ॥"

पद्मप्रभ-वासुपूज्यौ रक्तौ चन्द्र(प्रभ)-पुष्पदन्तौ शशिगौरौ। सुव्रत-नेमी कालौ पार्श्वः मल्लिः प्रियङ्ग्वाभ ॥

२ रलयोरैक्येन अरिस्थाने अलि। ३ सुधाकलशीया (श्लो० ३७) प्रोक्त च-"र कामे तीक्ष्णे वैश्वानरे नरे। रामे वज्रे च।"

गज–वृषभ–सिंह–पद्मा–स्रग्–चन्द्र–तपन–पताका ।
कुम्भा–ऽम्भोजसरो–ऽम्बुधि–विमान–रत्नोच्चयाऽग्नय' स्वप्ना' ॥–गीति

(इति) चतुर्दशस्वप्ननामानि, तत्र चत्वारि व्याख्यातानि । अथ चक्रं व्याख्यायते—

(नम-ऊ-अलि हन्त-आ' नम्) ह्–जल तस्मात् तन्यते–विस्तरति उत्पद्यते इति यावत् हन्त–कमल कर्मकर्तरि ड कमलस्योपलक्षणादन्यान्यपि पुष्पाणि गृह्यन्ते। 'आसिक् उपवेशने' (सिद्ध० धा०) आसन आस् । कमलादिपुष्पाणाम् आ –स्थानम्, एवंविधो यो नो–नत्रो रचनाविशेष. स्रक्–स्त तत् हन्तान क्लीबत्व प्राकृते लिङ्गस्यातन्त्रत्वात् । किम्भूतम्? 'नमो अरि' रलयोरैक्य । नम –भ्रङ्गीभाव परितो भ्रमण तेन ऊ –शोभमाना अलयो यत्र तत् । अवतेः शोभावाचिनः क्विपि ऊ. ॥ ८३ ॥

(न मोऽरिहन्ता न णं) म'–चन्द्रो वर्तते । किम्भूतः? 'णमि कौटिल्ये' (सिद्ध० धा०) नमते इति न क्विप । 'अम्वादे' (अत्वम सौ)' (सिद्ध० १–४–९०) इति न दीर्घः, भ्वादित्वात् । न न –न कुटिल, पूर्ण इत्यर्थ. । एवंविधश्चन्द्रोऽरिहन्ताऽस्तु । 'णं' इत्यत्रानुस्वाराभावश्चित्रत्वात् ॥ ८४ ॥

अथ सूर्य ।(नमो अर्-अहस्तानम )अहर्–दिन तनोति–करोति अहस्तानो–दिनकर' । अरा नियन्ते यत्र तत् अरि–चक्र तद्वदाचरति वृत्तत्वादाचारे क्यनि क्विपि तलोपे अर्, अर् चासौ अहस्तानश्च वृत्तो दीप्यमानश्च सूर्यस्त नम ॥ ८५ ॥

(नमोदन रह नानम) तानोद्भवत्वात् तान–वस्त्र, कारणे कार्योपचारात् । तान किम्भूतम्? 'नमोदन्' नम–नमन सर्वदिक्षु प्रसरण तेन अवते–कान्तिमद् भवति । क्विपि न मु दण्ड श्रयति । णिजि क्विपि पदस्य डलोपे दन । न मु च तद् दन् च नमोदन् । एतावता ध्वज इत्यर्थः । 'स्वराणा स्वरा' (सिद्ध० ८–४–२३८) इत्योकार । तं ध्वज त्व रह–जानीहि । 'रहुण गतौ' (सिद्ध० धा० ) 'गत्यर्था ज्ञानार्था' इति वचनात् ज्ञानार्थत्वम । चान्द्रमते णिचोऽनित्यत्वाण्णिजभावे रहेति सिद्धम् । अनुस्वारस्तदभावस्त्व चित्रत्वाददुष्टम् ॥ ८६ ॥

अथ कुम्भ. । (न मा ओ कल! श्रान्त अण) ओ कल ! कलश श्रयति णिजि क्विपि सम्बोधने । ओ कल ! 'ओ' इति सम्बोधनपदम । हे कलशाश्रयिन्! पुरुष! त्वम । 'हिंड्र गतिवृद्ध्यो ' (सिद्ध० धा० ) श्यन श्री–वृद्धि तस्या अन्त–विनाश न–मा अण–वद । कलशाश्रयिण पुरुषस्य वृद्धिनाशो न स्यात् । कामकुम्भो हि कामितकर, तेनैवमुच्यते । नकार-मकारौ निषेधवाचकौ । एकनिषेधेऽर्थसिद्धौ द्वितीयनिषेध "द्विर्बद्ध सुबद्ध भवति" इति न्यायादवगन्तव्य । लोकप्रधानत्वापेक्षया च निषेधद्वय 'मा' 'न' करि २ इत्यादि ॥८७॥

---

१ क–प्रतौ नास्त्यत्र पाठ गजादिको व्याख्यावान्यन्तक, किन्तु चतुर्दशस्वप्ननाममात्रक समस्ति ९३–पद्यस्यास्य प्रारम्भे । २ 'शोभावाच' इति क–पाठ । ३ 'क्विपि' इति ख–पाठ । ४ 'स२०' इति ख–पाठ । ५ 'म' इति ख–पाठ ।

अर्थ .

प्राकृतत्वाज्जसलुक् 'स्यम्-जस् शसां लुक्' ( सिद्ध० ८-४-३४४) अपभ्रंशे '[illegible]' (सिद्ध० ८-४-४४७) इति भाषाव्यत्ययात् प्राकृतेऽपि ॥ ७६ ॥

(न मोऽरि-हन्ता आः न) मृदं करोति णिजि अचि मः-कुम्भकारोऽस्ति । किम्भूतः? अरि-चक्रं तेन अर्हते-दीप्यते अरिहन्ता । सेऽपि न न भवतीति चेत्यर्थः । आः पादपूरणे ॥ ७७ ॥

(नः मोक-रहन्तानाम्) मोक-कायिकी रहन्ताण-त्यजता परिष्ठापयता साधुना नो भवति अविधिना त्यजता नः-कर्मबन्धः, विधिना त्यजता तु नो-ज्ञानं स्यादिति विवक्षयार्थद्वयम् ॥ ७८ ॥

अथ चतुर्दशस्वप्नवर्णनम्-(नम-करी ऋण-हन्ता ण) नम'-प्रह्वीभावः, सौम्यत्वमिति यावत्, तेन अवति-दीप्यते। अवधातुरेकोनविंशत्यर्थेषु। तत्र दीप्त्यर्थोऽप्यस्ति । नमश्चासौ करी-हस्ती । सौम्यो गज इत्यर्थः । सोऽदुःखहेतुत्वात् ऋण-दुःख, कारणे कार्योपचारात् हन्ति-विनाशयति । अणमित्यत्र 'स्वराणां स्वराः' (सिद्ध० ८-४-२३८) इत्यात्वम् । 'हन्ताण' इत्यत्र 'पदयोः सन्धिर्वा' (सिद्ध० ८-१-५) इति सन्धौ 'अधो म-न-याम्' (सिद्ध० ८-२-७८) यलोपे सिद्धिः ॥ ७९ ॥

(नम! उअ रथ-तान) रह-रथं तानयति-विस्तारयति स्थानात् स्थानान्तरं नयति, 'नवाऽखित्कृदन्ते रात्रेः' (सिद्ध० ३-२-११७) इति मोऽन्ते रथतानो-वृषभः तं 'उअ पश्य' ( सिद्ध० ८-२-२११ ) । नमेति हे नम! नमतीति नमः तत्सम्बुद्धिः ॥ ८० ॥

(न-मोक-करिहन्ता आनाम्) 'णहींच् बन्धने' (सिद्ध० धा० ) नह्यते इति भावे ड प्रत्यये न-बन्धनं तस्योपलक्षणादन्याऽपि पीडा ग्राह्या। तस्मान्मोचयति नमोक् णिगन्ताद् विच् करिहन्ता-सिंहः । नमोक् चासौ करिहन्ता च स तथा । केषाम्? 'आणम्'[1] 'अणी असी गत्यादानयोश्च' (सिद्ध० धा० ) इति चानुत्कृष्टशोभार्थादचेड्डे प्रत्यये अः-शोभमानः, पुण्यवान्नर इत्यर्थः । तेषां एवंविधः सिंहो दृष्टः । पीडाहरः स्यादित्यर्थः ॥ ८१ ॥

(नमोदर-ह ता-ऽऽनम्) ता-लक्ष्मीः तस्याः आनं वर्णच्युतकादसनं वर्तते । किम्भूतम्? 'नमोदरह' नम-नमत् उदरं ह-जलं यत्र तत् तथा । 'एकार्थं चानेकं च' (सिद्ध० ३-१-२२ ) इति समासः । आसने स्थिता लक्ष्मीः स्वं जलेन सिञ्चति इति लक्ष्म्या अभिषेकः । स्वप्ने दृष्ट इति तथा वर्णितम् । वर्णच्युतिश्च नैषधस्यादिकाव्ये (स० १, श्लो० १)-"तथाऽऽद्रियन्ते न बुधाः सुधामपि" इत्यत्र सुधाशब्देन वसुधा व्याकुर्वता टीकाकारेण महाकविना दर्शिता ॥ ८२ ॥

---

१ 'हरेत्यर्थः' इति ख-पाठः । २ सम्पूर्णं पद्यमेवम्—

"निपीय यस्य क्षितिरक्षिणः कथाः-स्तथाऽऽद्रियन्ते न बुधाः सुधामपि ।
नलः सितच्छत्रितकीर्तिमण्डलः स राशिरासीन्महसां महोज्ज्वलः ॥"

गज-वृषभ-सिंह-पद्मा-सन-स्रग्-चन्द्र-तपन-पताका ।
कुम्भा-ऽम्भोजसरो-ऽम्बुधि-विमान-रत्नोच्चयाऽग्नय' स्वप्ना ॥-गीति

(इति) चतुर्दशस्वप्ननामानि, तत्र चत्वारि व्याख्यातानि । अथ स्रग् व्याख्यायते—

(नम-ऊ-अलि हन्त-आः नम्) ह-जल तस्मात् तन्यते-विस्तरति उत्पद्यते इति यावत् हन्त-कमल कर्मकर्तरि ड' कमलस्योपलक्षणादन्यान्यपि पुष्पाणि गृह्यन्ते। 'आसिक् उपवेशने' (सिद्ध० धा०) आसन आम्। कमलादिपुष्पाणाम् आ -स्थानम्, एवंविधो यो नो-बन्धो रचनाविशेष स्रग्रूप' तत् हन्तानं क्लीवत्व प्राकृते लिङ्गस्यातन्त्रत्वात्। किम्भूतम्? 'नमो अरि' रलयोरैक्य। नम -प्रह्वीभाव' परितो भ्रमण तेन ऊ -शोभमाना अलयो यत्र तत्। अवतेः शोभार्थाचिन क्विपि ऊ ॥ ८३ ॥

(न मोऽरिहन्ता न ण) मः-चन्द्रो वर्तते। किम्भूतः? 'णसि कौटिल्ये' (सिद्ध० धा०) नसते इति न, क्विप्। 'अभ्वादे (अत्यस सौ)' (सिद्ध० १-४-९०) इति न दीर्घः, भ्वादित्वात्। न न -न कुटिलः, पूर्ण इत्यर्थ'। एवंविधश्चन्द्रोऽरिहन्ताऽस्तु। 'ण' इत्यत्रानुस्वाराभावश्चित्रत्वात् ॥ ८४ ॥

अथ सूर्य। (नमो अर्-अहस्तानम्) अहर्-दिन तनोति-करोति अहस्तानो-दिनकरः। अरा विद्यन्ते यत्र तत् अरि-चक्र तद्वदाचरति वृत्तत्वादाचारे क्यनि क्विपि तयोर्लोपे अर्, अर् चासौ अहस्तानश्च वृत्तो दीप्यमानश्च सूर्यस्त नम ॥ ८५ ॥

(नमोदन् रंह तानम्) तानोद्भवत्वात् तान-वस्त्र, कारणे कार्योपचारात्। तानं किम्भूतम्? 'नमोदन्' नम-नमन सर्वदिक्षु प्रसरण तेन अवते-कान्तिमद् भवति। क्विपि न मु दण्ड श्रयति। णिजि क्विपि पदस्य उलोपे दन्। न मु च तद् दन् च नमोदन्। एतावता ध्वज इत्यर्थः। 'स्वराणा स्वरा' (सिद्ध० ८-४-२३८) इत्योकार। तं ध्वज त्व रह-जानीहि। 'रहुण् गतौ' (सिद्ध० धा०) 'गत्यर्था ज्ञानार्था' इति वचनात् ज्ञानार्थत्वम्। चान्द्रमते णिचोऽनित्यत्वाण्णिजभावे रहेति सिद्धम्। अनुस्वारस्तदसत्त्व चित्रत्वाददुष्टम् ॥ ८६ ॥

अथ कुम्भ। (न मा ओ कलः! ह्ा-न्त अण) ओ कल! कलश श्रयति णिजि क्विपि सम्बोधने। ओ कल! 'ओ' इति सम्बोधनपदम्। हे कलशाश्रयिन्! पुरुष! त्वम्। 'हिद् गतिवृद्ध्यो' (सिद्ध० धा०) हयन हो-वृद्धि तस्या अन्त-विनाश न-मा अण-वद। कलशाश्रयिण पुरुषस्य वृद्धिरतो न स्यात्। कामकुम्भो हि कामितकर, तेनैवमुच्यते। नकार-मकारौ निषेधवाचकौ। एकनिषेधेऽर्थसिद्धौ द्वितीयनिषेध "द्विर्वद्ध सुबद्ध भवति" इति न्यायादवगन्तव्य। लोकप्रधानत्वापेक्षया च निषेधद्वय 'मो' 'न' करि॰ इत्यादि ॥८७॥

---

१ क-प्रतौ नास्त्ययाय पाठ गजादिको व्याख्यातान्यन्तक, किन्तु चतुर्दशस्वप्ननामप्रान्तक समस्ति ९३-तमस्याथस्य प्रारम्भे। २ 'शोभाचात्' इति क-पाठ। ३ 'क्विपि' इति ख-पाठ। ४ 'सद०' इति ख-पाठ। ५ 'म' इति ख-पाठ।

अथ पद्मसरः । (न मोद् रः हान्ताः न) गे वर्तते । किम्भूत ? 'हान्ताः' हकारोऽन्ते यस्य । एतावता सकारः । तेन अराति-शोभते इति हान्ताम् । एतावता सरः इति जातम् । अब्जानि-कमलानि श्रयतीति णिचि क्विपि तलोपे अन्त्यस्वरादिलोपे । 'पदस्य' (सिद्ध० २-१-८९) इति जलोपे च 'अन्' इति जातम् । 'अन्त्यव्यञ्जनस्य' (सिद्ध० ८-१-११) इति प्राकृते यकारस्यापि लोपे अम् इति स्थितम् । एतावता पद्माश्रित सर इत्यर्थ' । किम्भूतम् ? मोदयति मोद्, एवंविध न न । प्रकृतार्थं द्वौ निषेधौ । हर्षकारकमेवेत्यर्थः ॥ ८८ ॥

अथ सागरः । (नम-ऊ-जलध्यन्त -आनन्) नम नमन-सर्वत्र प्रसरण तेन ऊ -शोभमान एवविधो जलध्यन्तः-समुद्रः । अन्तशब्दः स्वरूपे । किम्भूतः ? 'टुनदु समृद्धौ' (सिद्ध० धा०) आङ्पूर्वं नद् । आनन्दयति-समृद्धि प्रापयति सेवकान्, रत्नाकरत्वात् । विचि 'आनन्' इति सिद्धम् ॥ ८९ ॥

अथ विमानः । (नम ओ अ-र-ह-अन्त ! ऋणम्) अन्तशब्देन 'पदैकदेशे पदसमुदायोपचारात्' निशान्त-गृहम् । "र. कामे तीक्ष्णे वैश्वानरे नरे" इत्येकाक्षर(सुधा० श्लो० ३६) वचनात् रो-नर न र' अर' । अरो-देवः । अरान्-देवान् हन्ति-गच्छति प्राप्नोति देवाश्रितत्वात् अरहम्, एवविध अन्त-निशान्त अरहन्तम्, अमरविमानमित्यर्थ. । तस्य सम्बुद्धौ हे अरहन्त ! त्व ऋण-दु ख नामय-पराकुरु । 'नम' इत्यत्रान्तर्भूतो णिगर्थः । 'ओ' इति 'हे' इत्यर्थ ॥ ९० ॥

(नः म-ऊत-र-अहर्-अन्त-गण ) "मश्चन्द्रे (च) विधौ शिवे" इति (सुधा० श्लो० ३४ ) वचनात् मः-चन्द्रः तेन ऊत-कान्त मोत, चन्द्रकान्तमित्यर्थ । रः-अग्निः तत्तुल्य, तथा अहर्-दिन । अहः करोति णिजि क्विपि अह'-सूर्य तद्वदन्त -स्वरूप यस्य, सूर्यकान्त इत्यर्थ । एतावता चन्द्रकान्ते वह्निवर्णसूर्यकान्तादीनि रत्नानि । उपलक्षणादन्यान्यपि रत्नानि ग्राह्याणि । तेषा गण -समूहोऽस्ति । 'क ग च ज ( त द-प य वा प्रायो लुक्)' (सिद्ध० ८-१-१७७) इति गलुक् । 'पदयो सन्धिर्वा' (सिद्ध० ८-१-५) इति सन्धि । यथा चक्काउ चक्रवाक[1] । 'णिश समाधौ' (सिद्ध० धा० ) नेशति-समाधि करोति चित्तस्वास्थ्य निर्मापयतीति[2] डे न ॥ ९१ ॥

अथाग्नि । (नम ओ अज-रथ त्रि-अणम्) अज'-छागो रथो-वाहन यस्य स अजरथो-वह्नि त त्र्यण त्रयोऽणा[3] शब्दा यस्य स', त्रिविधोऽग्निरिति कविसमयः । 'ओ' इति सम्बोधने । त नम-प्रणमेति स्वप्नाः १४ ॥ ९२ ॥

(नमो अरहन्ताण ) न-ज्ञान । अरहन्ताणम्-अत्यजता पुरुषाणा उख् भवति । 'उख् नखे'ति गत्यर्थौ दण्डकधातु । 'ओखण ओग्' विचि सिद्धम् । अन्त्यव्यञ्जनलोपे ओ-

1 'चक्काओ' इति ख-पाठ । 2 'निर्मातीति' इति ख-पाठ । 3 दक्षिण-गार्हपत्या-ऽऽहवनीयस्थानीय ।

गतिर्भवतीत्यर्थ । गतिः सैव या सङ्गतिः । यथा "कुले हि जातो न करोति पापं" इत्यत्र कुलं तदेव यत् सत्कुलमिति ॥ ९३ ॥

(नं ओ तर हन् ! नां नः) हंस अणति-श्रयति वाहनतया णिजि क्विपि हन् । 'ओ' इति सम्बोधने । हे हन् [1]-हे सरस्वति ! न-अस्माक नं-ज्ञान ता-शोभा च तर-देहि । तृधातुः दाने वर्तते (अन्यथा विपूर्वोऽपि दाने न प्रवर्तेत) उपसर्गाणा धात्वर्थद्योतकत्वात् । तृधातौ दानार्थोऽस्तीति ॥ ९४ ॥

(नम् ओ अर अहर् अन्त ! ण) अन्तशब्देन (पदैक)देशे समुदायोपचारात् हेमन्त इति । अहर्-दिन नमतीति नम-कृश हे हेमन्तऋतो ! त्वं नम-कृश दिन अर-प्राप्नुहि । 'ण' अलङ्कारे । हेमन्ते दिनलघुता इति प्रसिद्धम् ॥ ९५ ॥

(नमः अरे ह-तानाम्) "रं तीक्ष्णे" इति (वि-वशम्भुनाममालाया श्लो० १०१) वचनात् र-तीक्ष्णं उष्णमिति यावत् । न र अर-अतीक्ष्णः, शिशिर ऋतु इत्यर्थः, तस्मिन् अरे-शिशिरऋताविल्यर्थ । अपभ्रंशे इकार । 'व्यत्ययोऽप्यासाम्' [3] इति व्यत्यय स्याच्च । ह-जल तस्मात् तन्यन्ते-विस्तार यान्ति हतानि-जलरुहाणि, पद्मानीत्यर्थ । तेषा नमो नमन-कृशता भवति । शिशिरे हि कमलानि हिमेन शुष्यन्तीति प्रसिद्धम् ॥ ९६ ॥

(नम् उ सुरभ् हान्ताम् ण) हकारोऽन्ते यस्य स हान्तः । सकार इत्यर्थ । तेन अस-ति-शोभते हान्तास् । एवंविधो रभ्शब्द. । पुन. किम्भूत ? 'उ' 'अ' उकारेणासति-शोभते उ अप् 'अन्त्यव्यञ्जनस्य' (सिद्ध० ८-१-११) इति पलोप । उरह्(ह) इति शब्द स सकारयुक्त. क्रियते तदा सुरह इति जातम् । कोऽर्थ ? सुरभि-वसन्तऋतु तमाचष्टे स्तौति इच्छति वा य पुरुष स सुरभ् णिजि तलोपे सिद्धम् । क्विप् लोपश्च । उ अरह् इत्यत्र अन्त्यव्यञ्जनलोप । सुरभ्शब्देन वसन्तस्तावक पुरुष इत्यर्थ । "ण प्रकटे निष्फले च" इति (सुधा० श्लो० २२) वचनात् ण-प्रकट यथा स्यात् तथा नम् स्यात् नमतीति नम्-प्रह्वीभावः, उद्युक्त सर्वकर्मणीत्यर्थ ॥ ९७ ॥

(न मोदः रः हा-ऽन्तानः) "र तीक्ष्णे" (वि-व० श्लो० १०१) इति वचनात् । र-उष्ण, ग्रीष्मऋतुरित्यर्थ । किम्भूत ? हं-जलं अन्त आनयतीति हान्तान, ग्रीष्मे जलशोप स्यादित्यर्थ । मोदयतीति मोद । एवंविधो न । ग्रीष्म (प्राय) परिताप-करत्वान्न मोदकृत् ॥ ९८ ॥

(नमोऽर' हन्तान.) उ अर । कोऽर्थ ? । ऋत्वर 'रह त्यागे' (सिद्ध० धा०) रह्यते-त्यज्यते इति भावे डप्रत्यये रो-निन्द्य, न र अर, उत्तम इत्यर्थ । ऋतुषु अर-उत्तम. ऋत्वर, सर्वऋतुप्रधान इत्यर्थ । स क इति विशेषणद्वारेणाह-'हन्तान' ह-जल तानयति-विस्तारयति हन्तान । वर्षा ऋतुरित्यर्थ' । किम्भूत ? 'नम' नमति-प्रह्वीकरोति

1 'प्रसिद्धि' इति ख-पाठ । 2 हेमेऽनेकार्थे (का० १, श्लो० ११) अपि । 3 'व्यत्यय' इति सिद्ध० (८-४-४४७) ।

अथ पद्मसरः। (न मोदू रः हान्ताः न) गे वर्तते। किम्भूतः? 'हान्ताः' हकारोऽन्ते यस्य। एतावता सकारः। तेन असति–शोभते इति हान्ताम। एतावता सरः इति जातम्। अब्जानि–कमलानि श्रयतीति णिचि क्विपि तलोपे अन्त्यस्वरादिलोपे। 'पदस्य' (सिद्ध० २–१–८९) इति जलोपे च 'अन्' इति जातम्। 'अन्त्यव्यञ्जनस्य' (सिद्ध० ८–१–११) इति प्राकृते नकारस्यापि लोपे अम् इति स्थितम्। एतावता पद्माश्रित सर इत्यर्थः। किम्भूतम्? मोदयति मोदू, एवंविध न न। प्रकृतार्थं द्वौ निषेधौ। इयंकारकमेवेत्यर्थः॥ ८८॥

अथ सागरः। (नम-ऊ-जलध्यन्त-आनन्) नम नमन–सर्वत्र प्रसरण तेन ऊ–शोभमान एवंविधो जलध्यन्तः–समुद्रः। अन्तशब्दः स्वरूपे। किम्भूतः? 'टुनदु समृद्धौ' (सिद्ध० धा०) आङ्पूर्व नदू। आनन्दयति–समृद्धिं प्रापयति सेवकान्, रत्नाकरत्वात्। विचि 'आनन्' इति सिद्धम्॥ ८९॥

अथ विमानः। (नम ओ अ-र-ह-अन्त! ऋणम्) अन्तशब्देन 'पदैकदेशे पदसमुदायोपचारात्' निशान्त–गृहम्। "रः कामे तीक्ष्णे वैश्वानरे नरे" इत्येकाक्षर(सुधा० श्लो० ३६) वचनात् रो–नर न रः अरः। अरो–देवः। अरान्–देवान् हन्ति–गच्छति प्राप्नोति देवाश्रितत्वात् अरहम्, एवंविधं अन्त–निशान्त अरहन्तम्, अमरविमानमित्यर्थः। तस्य सम्बुद्धौ हे अरहन्त! त्वं ऋण–दुःख नामय–पराकुरु। 'नम' इत्यत्रान्तर्भूतो णिगर्थः। 'ओ' इति 'हे' इत्यर्थे॥ ९०॥

(नः म-ऊत-र-अहर्-अन्त-गण) "मश्चन्द्रे (च) विधौ शिवे" इति (सुधा० श्लो० ३४) वचनात् मः–चन्द्रः तेन ऊत–कान्त मोत, चन्द्रकान्तमित्यर्थः। रः–अग्नि तत्तुल्य, तथा अहर्–दिन। अहः करोति णिजि क्विपि अहः–सूर्यः, तद्वदन्तः–स्वरूप यस्य, सूर्यकान्त इत्यर्थः। एतावता चन्द्रकान्ते वह्निवर्णसूर्यकान्तादीनि रत्नानि। उपलक्षणादन्यान्यपि रत्नानि ग्राह्याणि। तेषां गणः–समूहोऽस्ति। 'क ग च ज (त द-प य वा प्रायो लुक्)' (सिद्ध० ८–१–१७७) इति गलुक्। 'पदयोः सन्धिर्वा' (सिद्ध० ८–१–५) इति सन्धिः। यथा चक्काउ[1] चक्रवाक। 'णिश समाधौ' (सिद्ध० धा०) नेशति–समाधिं करोति चित्तस्वास्थ्य [2]निर्मापयतीति डे नः॥ ९१॥

अथाग्नि। (नम ओ अज-रथ त्रि-अणम्) अजः–छागो रथो–वाहन यस्य स अजरथो–वह्नि त त्र्यणं त्रयोऽणाः शब्दा यस्य सः, [3]त्रिविधोऽग्निरिति कविसमयः। 'ओ' इति सम्बोधने। त नम–प्रणमेति स्वप्नाः १४॥ ९२॥

(नमो अरहंताण) न–ज्ञान। अरहन्ताणम्–अत्यजतां पुरुषाणां उखू भवति। 'उखू नखे' ति गत्यर्थो दण्डकधातु। 'ओखण ओगू' विचि सिद्धम्। अन्त्यव्यञ्जनलोपे ओ–

१ 'चक्काओ' इति ख–पाठ। २ 'निर्मातीति' इति ख–पाठ। ३ दक्षिण–गार्हपत्या–ऽऽहवनीयस्थानीय।

गतिर्भवतीत्यर्थः । गतिः सैव या सद्गतिः । यथा "कुले हि जातो न करोति पापं" इत्यत्र कुलं तदेव यत् सत्कुलमिति ॥ ९३ ॥

( न ओ तर ह्न् ! तां नः ) हस अणति-श्रयति वाहनतया णिजि क्विपि हन् । 'ओ' इति सम्बोधने । हे हन् !-हे सरस्वति ! न-अस्माकं नं-ज्ञानं ता-शोभा च तर-देहि । तृधातुः दाने वर्तते (अन्यथा विपूर्वोऽपि दाने न प्रवर्तेत) उपसर्गाणां धात्वर्थद्योतकत्वात्। तृधातौ दानार्थोऽस्तीति ॥ ९४ ॥

(नम् ओ अर अह्र् अन्त ! णं) अन्तशब्देन (पदैक)देशे समुदायोपचारात् हेमन्त इति । अह्र्-दिनं नमतीति नम-कृशं हे हेमन्तऋतो ! त्वं नम-कृशं दिनं अर-प्रापय । 'णं' अलङ्कारे । हेमन्ते दिनलघुता इति प्रसिद्धम् ॥ ९५ ॥

( नमः अरे ह-तानाम् ) "रं तीक्ष्णे" इति ( विश्वशम्भुनाममालाया श्लो० १०१ ) वचनात् र-तीक्ष्णं उष्णमिति यावत् । न र अर-अतीक्ष्णः, शिशिर ऋतुः इत्यर्थः, तस्मिन् अरे-शिशिरऋताविल्यर्थः । अपभ्रंशे इकारः । '[3]व्यत्ययोऽप्यासाम्' इति व्यत्ययः स्याच्च । ह-जलं तस्मात् तन्यन्ते-विस्तारं यान्ति हतानि-जलरुहाणि, पद्मानीत्यर्थः । तेषां नमो नमन-कृशता भवति । शिशिरे हि कमलानि हिमेन शुष्यन्तीति प्रसिद्धम् ॥ ९६ ॥

( नम् उ सुरभ् हान्तास् ण ) हकारोऽन्ते यस्य स हान्तः । सकार इत्यर्थः । तेन असति-शोभते हान्तास् । एवंविधो रभूशब्दः । पुनः किम्भूतः ? 'उ' 'अ' उकारेणासति-शोभते उ अप् 'अन्त्यव्यञ्जनस्य' ( सिद्ध० ८-१-११ ) इति पलोपः । उरह्(ह) इति शब्दः स सकारयुक्तः क्रियते तदा सुरह इति जातम् । कोऽर्थः ? सुरभि-वसन्तऋतुः तमाचष्टे स्तौति इच्छति वा यः पुरुषः स सुरभ्, णिजि तलोपे सिद्धम् । क्विप् लोपश्च । उ अरह् इत्यत्र अन्त्यव्यञ्जनलोपः । सुरभूशब्देन वसन्तस्तावकः पुरुष इत्यर्थः । "णः प्रकटे निष्फले च" इति ( सुधा० श्लो० २२ ) वचनात् ण-प्रकटं यथा स्यात् तथा नम् स्यात् नमतीति नम्-प्रह्वीभावः, उद्युक्तः सर्वकर्मणीत्यर्थः ॥ ९७ ॥

( न मोदः रः हा-ऽन्तानः ) "र तीक्ष्णे" ( विश्व० श्लो० १०१ ) इति वचनात् । र-उष्णः, ग्रीष्मऋतुरित्यर्थः । किम्भूतः ? ह-जलं अन्तं आनयतीति हान्तानः, ग्रीष्मे जलशोषः स्यादित्यर्थः । मोदयतीति मोदः । एवंविधो न । ग्रीष्मः (प्रायः) परितापकरत्वान्न मोदकृत् ॥ ९८ ॥

( नमोऽरः ह्न्तानः) उ अर । कोऽर्थः ? । ऋत्वर 'रह त्यागे' (सिद्ध० धा० ) रह्यते-त्यज्यते इति भावे डप्रत्यये रो-निन्द्य, न र अर, उत्तम इत्यर्थः । ऋतुषु अर-उत्तमः ऋत्वर, सर्वऋतुप्रधान इत्यर्थः । स क इति विशेषणद्वारेणाह-'ह्न्तान' ह-जलं तानयति-विस्तारयति ह्न्तानः । वर्षा ऋतुरित्यर्थः । किम्भूतः ? 'नमः' नमति-प्रह्वीकरोति

१ 'प्रसिद्धिः' इति ख-पाठः । २ हैमेऽनेकार्थ (का० १, श्लो० ११) अपि । ३ 'व्यत्यय' इति सिद्ध० ( ८-४-४४७ ) ।

स्वोपमान् सर्वजनान् करोति अन्तर्भूतणिगर्थत्वात् नम् । सर्वव्यापारप्रवर्तक इत्यर्थः ॥९९॥

(नम अरहा-ऽन्त! न) 'अरहन्त०' आपो-जल । 'रह त्यागे' (सिद्ध० धा०) रहन्ति-त्यजन्ति मुञ्चन्तीति अरहो-मेघाः तस्य अन्तो-विनाशो यस्मात् स' अरहान्तो-घना-त्यय, शरद् इत्यर्थ । हे अरहान्त!-हे शरत्! त्व । न निषेधे । 'नम' इति क्रियापदम् । मा नम-मा कृशीभव । शरदोऽतिरमणीयत्वादेवमुक्ति ॥१००॥ इति षड् ऋतव सम्पूर्णा ॥

अथ नव ग्रहा वर्ण्यन्ते । तत्र सूर्यचन्द्रौ पूर्वं, तत्रापि चन्द्रः प्रथम सिद्धान्तवेदिना मते । (नमोऽरभ त्राणम्) "र तीक्ष्णे" इति (विश्व० श्लो० १०१) वचनात् र-तीक्ष्ण, न र अर, शीत इत्यर्थ' । अरा-शीता भा-कान्तिः यस्य स अरभ-शीतगु त नमो-ऽस्तु । चन्द्र किम्भूत? त्राण-शरण, सर्वनक्षत्राणा ग्रहाणा च नायकमित्यर्थ ॥ १०१ ॥

अथ सूर्य । (नमो रभ ता-ऽऽ नम्) रा-तीक्ष्णा भा-कान्ति यस्य स रभ, सूर्य इत्यर्थ । रभाय-सूर्याय नम । 'व्यत्ययोऽप्यासाम्' (आसा) विभक्तीना व्यत्ययोऽपि स्यादिति वचनात् चतुर्थ्यर्थे द्वितीया । च पूर्वोक्तार्थसमुच्चये । किम्भूताय रभाय? 'तानाय' । "तकार-स्तस्करे युद्धे" (सुधा० श्लो० २३) इत्येकाक्षरवचनात् ता-चौरा तेषा आ-समन्तात् नो-बन्धन यस्मात् स तान तस्मै । सूर्योदये हि चौराणा बन्धन भवति ॥ १०२ ॥

अथ भौम । (न मौ अर! हन्ताऽऽन!) हे अर! । अर किम्भूत? 'आन' आका-रस्य नो-बन्धो यत्र, एतावता आर-कुज । किम्भूतः? 'हन्त' हो-जल तस्य अन्तो यस्मात् स तथा, एवविधो न, जलदाता इत्यर्थ । किम्भूत सन्? 'मौ' "मश्चन्द्रे (च) विधौ शिवे" इति (सुधा० श्लो० ३४) वचनात् म-चन्द्र त अवति-प्राप्नोतीति क्विपि मौः । चन्द्रयुक्तो हि भौमो वर्षाकाले वृष्टिद ॥ १०३ ॥

अथ बुध । (न मौजो रै० भ तान') मो-ब्रह्मा । स अवति-देवतात्वेन स्वामीभवति । क्विपि मौ । स्वाम्यर्थे अवधातु । ततो मौ-रोहिणीनक्षत्र, तस्मात् जायते इति मौजो-बुध । "श्यामाङ्गो रोहिणीसुत" इति (अभिधान० का० २, श्लो० ३१) वचनात् 'रिह' रा-धन, तदेव भ-भवन, धनभवनमित्यर्थ, तत्र गत इति शेष । 'तान'' ता-लक्ष्मीं' आनयतीति तान । एवविधो न? किन्तु एवविध एवेति काकूक्त्या व्याख्येयम् । धन-भवनस्थो हि बुधो लक्ष्मीप्रद इति ज्योतिर्विद । रैशब्दस्य 'एत एत्' (सिद्ध० ८-१-१४८) 'स्वराणा स्वरा.' (सिद्ध० ८-४-२३८) इतीकार ॥ १०४ ॥

अथ गुरुः । (नमः अद-ल-हन्ता आ-नः) "लश्चामृते" इति (सुधा० श्लो० ३९) वचनात् लः-अमृतम्, अदनम् अदो-भोजनम्, अदे-भोजने ल-अमृत येषा ते अदला-देवा, तान् हन्ति-गच्छति आचार्यतया प्राप्नोति अदलहन्ता-सुराचार्य, जीव इत्यर्थ । किम्भूत ।

१ 'सोचमान्' इति ख-पाठ । २ 'उमाङ्गो' इति ख-पाठ । ३ "बृहस्पति सुराचार्यो जीवश्चित्रशिखण्डिज" इति अभिधान० (का० २, श्लो० ३२)।

'आनः' आ–समन्तात् नो–ज्ञानं यस्मात् स आनः–ज्ञानदाता । किम्भूतः सन् ? 'नम' नो–बुद्धि' पञ्चम भवन तत्र 'मदुङ् स्तुति–मोद–मद–स्वप्न–करन्ति–गतिषु' मन्दते–गच्छति नमः डप्रत्यये सिद्धम् । लग्ने हि पञ्चमभवनस्थो गुरुर्ज्ञानदाता स्यादिति ॥ १०५ ॥

अथ शुक्रः । (नम उन्द-ल-भं तानम्) 'तान' तकारस्य षोडशव्यञ्जनत्वात् तशब्देन षोडश उच्यन्ते । 'अषी असी गत्यादानयोश्च' (सिद्ध० धा०) इत्यत्र चानुकृष्टदीप्त्यर्थात् असूधातो क्विपि अस् इति रूपम् । असो–दीप्तय', किरणा इति यावत् । तत ताः–षोडश असः–किरणाः तेषां नो–बन्धो योजना यस्य स तान'–शुक्र' । सन्धौ, दीर्घे 'अन्त्यव्यञ्जनस्य' (सिद्ध०८–१–११) इति सलोपे प्राकृते रूपसिद्धि । व्यञ्जनैश्च सङ्ख्याप्रतिपादनं ग्रन्थप्रसिद्धम् । यदुक्त आरम्भसिद्धौ—

"विद्युन्मुख १ शूली २ शनि ३ केतू ४ ल्का ५ वज्र ६ कम्प ७ निर्घाता' ८ ।
ङ ५ ज ८ ढ १४ द १८ ध १९ फ २२ ब २३ भ २४ सङ्ख्ये रविपुरत उपग्रहा धिष्ण्ये ॥१॥"

इत्यादि । "षोडशार्चिर्दैत्यगुरु" इति (अभिधान० का० २, श्लो० ३४) वचनात् तान'–षोडशकिरण, शुक्र इति यावत् । त शुक्र नम, धातूनामनेकार्थत्वात् भजस्वेत्यर्थ । किम्भूत ? ऊ अरह । 'उन्दैप् क्लेदने' (सिद्ध० धा०) उनत्ति–रोगै' क्लिन्नो भवति उन्दः तस्य । "लश्चामृते" इति (सुधा० श्लो० २९) वचनात् ल'–अमृत त भवतेऽन्तर्भूतणिगर्थत्वात् 'भूङ् प्राप्तौ' (                    ) धातो प्रापयति डे रूप उन्दलभं तम्, रलयोरैक्यम् । रोगार्तस्य हि शुक्रोऽमृतदाता । सञ्जीवनीविद्या शुक्रस्यैवेति तद्विद । अथवा "भश्चालिशुक्रयो" इति (सुधा० श्लो ३३) वचनात् भः–शुक्र । अरः–शीघ्रगामी चासौ भश्च अरभ' त नम–सेवस्व । उ इति सम्बोधनम् । किम्भूतं भम् ? 'तान' शुभकार्याणि तानयति–विस्तारय(ती)ति तान' तम् । शुक्रो हि शीघ्रगामी अनस्तमित' शुभ', शुभकार्याय भवति ॥ १०६ ॥

अथ शनि' । (नमोऽर हन्ता आनम्) "आर क्षितिसुतेऽर्कजे" इति विश्वप्रकाश(रवर्गे २२)वचनात् आर–शनि । 'स्वराणा स्वरा' (सिद्ध० ८–४–२३८) इति प्राकृते अर इति जातम् । अथवा अर कथम्भूत ? 'आन' अकारस्य नो–बन्धो यत्रेत्यनया व्युत्पत्त्या आर इति जातम् । आर–शनि नमोऽस्तु इत्युपहासनमस्कार । यतो हन्ता–जनपीडक तस्मात् हे आर! त्वा नमोऽस्तु इत्यर्थः ॥ १०७ ॥

अथ राहु । (न म उदरह: तान.) 'उअरह' उदरेण हीयते उदरहो–राहु । राहुस्तु उदरहीन, शिरोमात्ररूपत्वात्, तस्य । किम्भूत ? 'नम' 'नशौच् अदर्शने' (सिद्ध० धा०) नश्यतीति डे न । एवंविधो म–चन्द्रो यस्मात् स, उपलक्षणात् सूर्योऽपि ।

---

१ 'नमः उ अर भ तान' इत्यपि पदच्छेद । २ 'उदरे' इति ख-पाठः ।

राहुस्तु चन्द्रसूर्यो ग्रस्यति(सते ?) इति राहोश्चन्द्रनाशः । पुनः किंविशिष्ट ? 'शान ' तो-युद्ध तस्य नो-वन्धो रचना यस्मात् स तथा । राहुसाधनापूर्व ( सूर्यशशिभ्यां ) युद्धं क्रियते इतीद विशेषण युक्तिमत् ॥ १०८ ॥

अथ केतु । ( न मा उदरह-त-ऋणम् ) उदरहो-राहु । पूर्ववत् व्याख्या । तस्य तः-पुच्छं केतु । "तकारस्तस्करे युद्धे क्रोडे पुच्छे च" (सुधा० श्लो० २३) इत्येकाक्षरवचनम् । केतुस्तु राहुपुच्छत्वेन ज्योतिर्विदा संम्मत । यत.-"तत्पुच्छे मधुहाया आपद्दु.खं विपक्षपरितापः" (नीलकण्ठ्यां ?) । अत्र तत्पुच्छ इति राहुपुच्छ, केतुरित्यर्थ. इति ताजिके ।

हे उदरह[त] ! त्वं ऋण-ऋणवदाचर । मा निषेधे । ऋण यथा दु खदायि तथा केतुरपि उदित सन् जनपीडाकर , तत एवमुच्यते । त्व मा ऋण । नकारोऽपि निषेधार्थे । "द्विर्बद्ध सुबद्ध भवति" इति निषेधद्वयम् । विशेषेण निषेधाय इति ॥ १०९ ॥

अथ नव रसा वर्ण्यन्ते । तत्र पूर्व शृङ्गाररस । ( नमोदरि ! हन्त अण ) यथा कश्चित् कामी कुपितकामिनीप्रसत्तिकृते वक्ति । हे नमोदरि !-हे कृशोदरि ! त्व अण-वद । हन्तेति कोमलामन्त्रणे । नम-नमत् कृश उदर यस्या सा नमोदरी-क्षामोदरी तस्या सम्बोधनम् ॥ ११० ॥ [2]इति नमस्कारप्रथमपदार्था ॥

[3]प० हर्षकुलगणिपादकृता प० समयकलशस्य लघुशिष्येणालेखि(पत) ।



१ 'प्रसिद्ध ' इति ख-पाठ । २ अवशिष्टरसाष्टकस्य व्याख्या न विद्यते तत्र को हेतुरिति विचार्यता विचक्षणै. ।—३ 'इति श्रीपरमगुरुश्रीजिनमाणिक्यसूरिशिष्यपण्डितविनयसमुद्रगुरुराजपादुकाप्रसादासादिताधिगमनपण्डितगुणरत्नमुनिना लिखितम् । श्री श्री शुभ भवतु' इति ख-पाठ ।

क-परिशिष्टम्

## मलधारिगच्छीयश्रीसुधाकलशमुनिप्रणीता

# ॥ एकाक्षरनाममाला ॥

श्रीवर्द्धमानमानम्य सर्वातिशयसुन्दरम् ।
'एकाक्षरनाममाला' कीर्तयामि यथाश्रुतम् ॥ १ ॥
अः पुंल्लिङ्गः शार्ङ्गधारिण्यस्वल्पार्थेऽव्ययः पुनः ।
विरश्चावाश्च पुल्लिङ्ग आ वाक्ये स्मरणेऽव्ययः ॥ २ ॥
आः सन्तापेऽव्यये क्रुध्यामव्ययोऽर्थधृतौ स्मृतौ ।
इः कामे पुल्लिङ्ग इ वाऽव्ययः कोपोक्तिखेदयोः ॥ ३ ॥
ईः पद्मायामव्ययस्त्वी प्रत्यक्षे दुःखभावने ।
प्रकोपे सन्निधौ चैव पुल्लिङ्ग उर्वृषध्वजे ॥ ४ ॥
दोपोक्तौ मन्त्रणेऽप्यर्थे त्वव्ययस्त्व व्ययस्तथा ।
प्रश्ने चाङ्गीकृतौ रोपे पुल्लिङ्ग ऊस्तु रक्षणे ॥ ५ ॥
ऊमव्ययः प्रकोपोक्तौ प्रश्ने ऋर्देवमातरि ।
अव्यय ऋ तु कुत्साया वचनेऽपि तथैव च ॥ ६ ॥
ॠस्त्वजे दानवाञ्छाया ऌश्च स्याद् देवमातरि ।
ॡर्वाराह्या भवेदेस्तु विष्णावैस्तु वृषध्वजे ॥ ७ ॥
ओरूर्ध्वलिङ्ग आहूतावव्ययः स्यादनन्त औः ।
सम्बोधने चाव्यय औ परब्रह्मण्यमः शिवे ॥ ८ ॥
कः सूर्यमित्रवाय्वग्निब्रह्मात्मयमकेकिषु ।
प्रकाशवक्रयोश्चापि क नीरसुर(ख)मूर्धसु ॥ ९ ॥
कुर्भूकुत्सितशब्देषु पापीयसि निवारणे ।
ईषदर्थे च किंशब्दः कुत्सने क्षेपप्रश्नयोः ॥ १० ॥
वितर्काश्चर्यनिन्दासु किंशब्दः स्यात् कियानपि ।
खमिन्द्रियस्वर्गशून्यभूपाकाशसुखेषु च ॥ ११ ॥

---

१ 'शाश्विनम्' इति ख-टि-पाठ । २ 'यथाक्रमम्' इति ख-टि-पाठ । ३ 'पुलिङ्गशाङ्ग०' इति ख-पाठ । ...प्यधृतौ' इति ख-पाठ । ५ 'चाव्यय' इति ख-पाठ । ६ 'ऽव्यय उ स्त्वव्यय०' इति ख-पाठ । ७ 'कृते' ...इति ख-पाठ । ८ 'ऋश्च' इति ख-पाठ । ९ 'ऋर्वा०' इति ख-पाठ । १०–११ 'ओ' इति ख-पाठ ।

राहुस्तु चन्द्रसूर्यौ ग्रस्यति(सते?) इति राहोभङ्गनाशः। पुनः किंविशिष्ट? 'तान' तो-युद्ध तस्य नो-बन्धो रचना यस्मात् स तथा। राहुसाधनापूर्वं (सूर्यशशिभ्यां) युद्धं क्रियते इतीदं विशेषण युक्तिमत् ॥ १०८ ॥

अथ केतु'। (न मा उदरह-त-ऋणम) उदरहो-राहुः। पूर्ववद् व्याख्या। तस्य तः-पुच्छ केतु'। "तकारस्तस्करे युद्धे क्रोडे पुच्छे च" (सुधा० श्लो० २३) इत्येकाक्षरवचनम्। केतुस्तु राहुपुच्छत्वेन ज्योतिर्विदा संम्मत। यतः-"तत्पुच्छे मधुहाया आपद्दुःखं विपक्षपरिताप "(नीलकण्ठ्यां ?)। अत्र तत्पुच्छ इति राहुपुच्छ, केतुरित्यर्थ इति ताजिके।

हे उदरह[त]! त्वं ऋण-ऋणवदाचर। मा निषेधे। ऋण यथा दु खदायि तथा केतुरपि उदित सन् जनपीडाकर, तत एवमुच्यते। त्वं मा ऋण। नकारोऽपि निषेधार्थे। "द्विर्बद्ध सुबद्ध भवति" इति निषेधद्वयम्। विशेषेण निषेधाय इति ॥ १०९ ॥

अथ नव रसा वर्ण्यन्ते। तत्र पूर्वं शृङ्गाररस'। (नमोदरि! हन्त अण) यथा कश्चित् कामी कुपितकामिनीप्रसत्तिकृते वक्ति। हे नमोदरि!-हे कृशोदरि! त्व अण-वद। हन्तेति कोमलामन्त्रणे। नम-नमत् कृश उदर यस्या सा नमोदरी-क्षामोदरी तस्या सम्बोधनम् ॥ ११० ॥ [2]इति नमस्कारप्रथमपदार्थाः ॥

[3]प० हर्षकुलगणिपादकृताः प० समयकलशस्य लघुशिष्येणालेखि(पत)।



१ 'प्रसिद्ध' इति ख-पाठ। २ अवशिष्टरसाष्टकस्य व्याख्या न विद्यते तत्र को हेतुरिति विचार्यतां विचक्षणै।—३ 'इति श्रीपरमगुरुश्रीजिनमाणिक्यसूरिशिष्यपण्डितविनयसमुद्रगुरुराजपादुकाप्रसादासादिताधिगमपण्डितगुणरत्नमुनिना लिखितम्। श्री श्री शुभं भवतु' इति ख-पाठ।

धस्तु चित्रेऽश्ववारे च धीर्बुद्धाविषुधावपि ।
गुह्यकेशे विरञ्चौ धा तथा धूर्भारकम्पयोः ॥ २६ ॥
धूर्ते धुरा कम्पने च नो बुद्धौ ज्ञानबन्धयोः ।
अस्मानस्मभ्यमस्माकमेषा स्थाने भवेच्च नः ॥ २७ ॥
निषेधार्थेऽव्ययो नो च नकारस्तु नरस्तु ना ।
निः श्रुते नेतरि ख्यातौ नु[1]ः स्तुतावव्ययस्तु नौ ॥ २८ ॥
निः स्यात् क्षये[2] च नित्यार्थे भृशार्थाश्रयराशिषु ।
कौशले बन्धने मोक्षे संशये दान[3]कर्मणि ॥ २९ ॥
अधोभावोपरमयोः सन्निधानेऽव्ययो मतः ।
नुः प्रश्ने च वितर्के च विकल्पेऽनुशयेऽव्ययः ॥ ३० ॥
तरण्या नौस्तथा ख्यातः पः पाने पवने पथि ।
प्रौढे च वर्णके पश्च पा पातरि तथा श्रुते ॥ ३१ ॥
फकारो निष्फले जल्पे पुष्करे भयरक्षणे ।
[4]झञ्झावाते फले फेने फूत्कारे फूस्तथोदितः ॥ ३२ ॥
ब[5]कारो वरुणे पद्मे कलहे विगतौ तथा ।
भश्चालिशुक्रयोर्भावे भश्च दीप्तौ भये च[6] भीः ॥ ३३ ॥
भ धिष्ण्ये भूर्भुवि स्थाने मश्चन्द्रे तु विधौ शिवे ।
मौलौ च बन्धने मूः स्यात् मा माने वारणे[7]ऽव्ययः ॥ ३४ ॥
अस्मच्छब्दे द्वितीयाया मा च षष्ठ्या च मे पुनः ।
मा मातरि तथा लक्ष्म्या यस्तु वाते यमेऽपि च ॥ ३५ ॥
[8]यातर्यपि पशौ य स्यात् या याने यातरि श्रियाम् ।
खट्वाङ्गेऽपि च रः कामे तीक्ष्णे वैश्वानरे नरे ॥ ३६ ॥
रामे वज्रे च शब्दे स्यात् रा द्रव्ये कनके पुनः ।
आश्रये नीरदे च स्यात् रुः सूर्ये रक्षणेऽपि च ॥ ३७ ॥
भये शब्दे च री भ्रान्तौ लकारश्चलने पुनः ।
ला दाने लूश्च लवने लश्च लौ[9]श्च विडौजसि ॥ ३८ ॥
लश्चामृते दिशाया च लीः श्लेषे वलये तथा ।
वो वाते वरुणे रुद्रे सान्त्वने वा[10]ऽव्ययः पुनः ॥ ३९ ॥

१ 'नु स्तुतौ च प्रकीर्तित' इति ख-पाठ । २ 'क्षेपे' इति ख-पाठ । ३ 'दारुकर्मणि' इति ख-पाठ । ४ 'फ फा वाते' इति ख-पाठ । ५ 'ब कुम्भे वरुणे' इति ख-पाठ । ६ 'च' इति ख-पाठ । ७ 'मारणे' इति ख-पाठ । ८ 'यश्च घातरि सूर्ये स्यात्' इति ख-पाठ । ९ 'लश्च' इति ख-पाठ । १० 'वाव्ययः' इति ख-पाठ ।

रविदि शून्यखण्डे च वर्तते स्वश्च भास्करे ।
गो गन्धर्वे गणेशे च गीते ग गश्च गातरि ॥ १२ ॥
गीर्वाणीबाणभूरश्मिवज्रस्वर्गाक्षिवारिषु ।
दिशि धेनौ श्रुतंश्चर्यां गणेशे योऽपि गौः स्मृतः ॥ १३ ॥
घुः कुम्भे हनने घोषान्तर्मोदकिङ्किणीष्वपि ।
ङो विषये भैरवे चे चस्तरौ चन्द्रचोरयोः ॥ १४ ॥
चुश्चकोरे समाख्यातश्चकारः पुनरव्ययः ।
अन्योन्यार्थे विकल्पार्थे समासे पादपूरणे ॥ १५ ॥
पक्षान्तरे समूहार्थे हेताववधृतावपि ।
अन्वाच(च)ये तथा तुल्ययोगितायां च कीर्तितः ॥ १६ ॥
छः सूर्ये छेदके ख्यातस्तथा सवरणे भवेत् ।
छ च छन्दसि तडिति निर्मले च तथा स्मृतः ॥ १७ ॥
जश्च जेतरि जनने विगते जिस्तु जेतरि ।
जूर्विहायसि जवने पिशाच्या विगतेऽपि च ॥ १८ ॥
झो नक्त गायने नष्टे घर्घरध्वनिनामनि ।
चारुवाक्चोरयोर्ञस्तु ञ्यूहिते गूढरूपके ॥ १९ ॥
टः पृथिव्या ध्वनौ वायौ करङ्के ट पुनर्भुवि ।
चकोरेऽब्दे तथा ठस्तु घण्टे शून्ये बृहद्ध्वनौ ॥ २० ॥
चन्द्रस्य मण्डले रुद्रेऽथो वृषाङ्के ध्वनावपि ।
वन्दिवृन्दे तथा डः स्यात् यामिनीपतिमण्डले ॥ २१ ॥
ढो ढकाया समाख्यातस्तथा ढा निर्गुणे ध्वनौ ।
णः प्रकटे निष्फले च प्रस्तुते ज्ञानबन्धयोः ॥ २२ ॥
तकारस्तस्करे युद्धे क्रोडे पुच्छे च ता श्रियाम् ।
तुः स्यात् पूर्वे निवृत्तौ च पूर्वस्यादवधारणे ॥ २३ ॥
विलक्षणे विकल्पार्थे थो भवेद् भयरक्षणे ।
भूधरे च तथा भारे दो दाने दायकेऽपि च ॥ २४ ॥
दाने दातरि दा केचिद् विदुर्दा छेदबन्धयोः ।
द कलत्र तथा ध च धीरे च धनदे धने ॥ २५ ॥

१ 'चापि' इति ख-पाठ । २ 'ध' इति ख-पाठ । ३ 'चैव' इति क-पाठ । ४ 'यूहने' इति ख-पाठ । ५ 'घटे' इति ख-पाठ । ६ 'रुद्रे डो' इति ख-पाठ । ७ 'धश्च' इति ख-पाठ । ८ 'धने' इति ख-पाठ ।

श्रीविश्वशम्भुप्रणीता

# ॥ एकाक्षरनाममालिका ॥

[1]ध्यात्वा नत्वा निरीक्ष्यान्तःकरणे कर्मसाक्षिणि । क्रियते नूतना नाममालैकाक्षरवाचिका ॥ १ ॥
यतयो ये पर पार शब्दाम्भोधेर्गता यतः । एषा तेषामतो मान्या महाभावमनीषिणाम् ॥ २ ॥
स्वमेवार्थं स्वय रान्ति यतोऽकारादयः स्वराः । स्वराभावे ककारादि व्यञ्जन व्यर्थमेव हि ॥ ३ ॥
न क्षरत्यक्षर तेन स्वर एव तदुच्यते । व्यञ्जनानि स्वरार्थैव वर्णशब्देन वर्णिताः ॥ ४ ॥
अः शिवे केशवे वायौ ब्रह्मचन्द्राग्निभानुषु । आः स्वयम्भूस्तथोक्ते स्यादव्यय कोपपीडयोः ॥५॥
एषामपत्ये कामे स्याद् इः सम्बोधनकोपयोः । इः कुत्सार्थेऽपि कामेऽपि निषेधे नयनभ्रमे ॥६॥
ईः रमा मदिरामोहे महानन्दे शिरोभ्रमे । स्त्रीलिङ्गोऽयमुणाद्यन्तो नान्तोऽसाल्लोपन सुपः ॥ ७ ॥
ईर्यौ योऽत्र जसा रूप स्यादमा रूपमीञ् शसि । ईशब्दो द्रव्यपर्यायेऽव्यय वृद्धैः प्रदर्शितम् ॥८॥
उशब्दः शङ्करे तोये तोयधौ धरणीधरे । अवसाने वितर्केऽपि वचनावसरेऽव्ययम् ॥ ९ ॥
एतदर्थे निषेधेऽपि निर्णीतो दीर्घ ऊरपि । ऊं मान्तमव्यय कोपे स्वार्थेऽप्यू च प्रकीर्तितः ॥१०॥
रक्षार्थवाचकावेतौ व्याख्यातौ लघुदीर्घकौ । ऋशब्दः पावके सूर्ये धर्मे दाने धने पुमान् ॥११॥
आ अरौ अर एतानि अर चारौ च ऋन् शसि । ऋदीर्घो देवमाता स्याद् ऋभवस्तेन ते सुराः १२
स्त्रीलिङ्गोऽय धने वह्नौ वासवे वरुणालये । ऋ रौ रो रूपमेतस्य सन्धिसामान्यसाधनम् ॥ १३ ॥
ऌर्ह्रस्वो लघुसवादे शक्तौ सर्पिषि मातरि । लघ्वक्षरेऽपि ऌ क्लीबे दीर्घॡर्देवमातरि ॥ १४ ॥
वाराह्या वर्तते दीर्घः सौदामिन्यामिद द्वयम् । सर्पे मन्त्रे तथा तन्त्रे ऌद्वय लुकि वर्तते ॥१५॥
केऽपि दीर्घं न मन्यन्तेऽनुकृतौ मन्वते परे । कामसम्बोधने स्यादे तत ए ब्रह्म केवले ॥ १६ ॥
एशब्देनोदिता चण्डी गोचरी गोपनेऽव्ययम् । ऐ स्वर्णेऽपि च पुल्लिङ्गः शम्भुश्रीपतिवायुषु १७
सारदाया स्वरे सूर्ये मूर्च्छायामैरपि स्मृतः । ओशब्दो रक्षणे शेषे सूत्रे पुंसि श्रुतावपि ॥ १८॥
औः समुद्रे जलेऽनन्ते पीडने पुसि भाषणे । अ मान्तो ब्रह्मसवादे परब्रह्मप्रवाचकः ॥ १९ ॥
व्यसने व्याधिते व्याधौ ज्ञानविज्ञानवन्दने । अः सान्तः शङ्करे सूर्ये दानादानप्रदीप्तिषु ॥ २० ॥
सत्ताया क्षेपणे खेदे तथाऽऽश्चर्ये च निन्दके । को ब्रह्मात्मप्रकाशार्ककेकिवायुयमाग्निषु ॥ २१ ॥
क मौलिसुखतोयेषु कशब्दः सर्वलिङ्गक' । सर्वनामगणोक्तो यस्तस्य रूप त्रिलिङ्गकम् ॥ २२ ॥
कु स्त्रिया भुवि कुत्सायामव्यय कु प्रकीर्तितम् । कः का कि शब्दयोर्मान्तः क कान्तौ कामवाचकम्
वाच्यलिङ्ग' खशब्दोऽर्के वितर्के व्योम्नि वेदने । प्रश्ननिन्दानृपक्षेपसुखशून्येन्द्रिये दिवि ॥२४॥

---

१ पुन कर्मसाक्षिणमिति विभक्तिविपरिणाम । कर्मसाक्षिणो भगवतोऽधिष्ठानभूतस्य अन्त करणस्याधिष्ठातृमाहात्म्यादेव कर्मसाक्षित्व ज्ञापयितुमत्र सप्तमी । तेन च तदधिष्ठातृप्रेरणाबलादेव मया नूतना नाममाला कल्प्यत इति भाव । उक्त च—"शब्दाम्भोधिर्यतोऽनन्त कुतोऽप्यगमदव्ययाद् । सरस्वत्या प्रसादेन कवियाति यत्पदम् ॥ प्रसिद्धमप्रसिद्ध वा सत्प्रमाण च साधय ॥" इति । २ ख–'सानुषु' । ३ ख–'सर्पिषिमातरि' । ४ ख–'ते सथा' । ५ क–'स्वेदे' ।

पदार्थ उपमाने च विकल्पे च समुच्चये ।
विः श्रेष्ठेऽतीते नानार्थे थे हेतौ पादपूरणे ॥ ४० ॥
द्वितीयायाश्चतुर्थ्याश्च षष्ठ्या युष्मदस्मदुत्वके ।
चश्चासा तु विभक्तीना द्वित्वे वा कथितो बुधैः ॥ ४१ ॥
आकाशे विहगे विश्वे शं श्रेयसि सुखेऽव्ययः ।
शा तु शान्ते च शालाया शीः शये हिमनेऽपि च ॥ ४२ ॥
शुश्चन्द्रे षः सदारः स्यात् तथेष्टे प्रसवे तु पूः ।
सः सूर्ये च परोक्षे च स शङ्का वाऽव्ययस्तु सः ॥ ४३ ॥
सङ्गार्थे शोभनार्थे च प्रकृष्टार्थसमर्थयोः ।
प्रथमान्ततद' स्थाने स्मृतौ लक्ष्म्यां च सोच्यते ॥ ४४ ॥
हः शूलिनि करे नीरे, क्रोधगर्भप्रभाषणे ।
निवासेऽथाव्ययो हः स्यात् सम्बुद्धौ पादपूरणे ॥ ४५ ॥
अव्ययो हा स्मृतः शोके तथा दुःखविषादयोः ।
हि हेतौ पादपूर्तौ च विशेषे चावधारणे ॥ ४६ ॥
स्फुटे दानेऽथाव्ययो ही दु'खहेतौ च विस्मये ।
विषादे चाव्ययो हु स्वनुनये कोपभाषणे ॥ ४७ ॥
हुमव्ययः परिप्रश्ने वितर्के वचने तु हौ ।
हे कुत्साया तथा हे' तु हेतौ सम्बोधने तु हौ ॥ ४८ ॥
राक्षसे क्षस्तथा क्षेत्रे शब्दा ये द्व्यक्षरादयः ।
स्वरान्ता व्यञ्जनान्ताश्च ज्ञेया ग्रन्थान्तरात् तु ते ॥ ४९ ॥
मलधारिगच्छभर्तुः, सूरेः श्रीराजशेखरस्य गुरोः ।
शिष्यः सुधाकलश इत्येकाक्षरमालिकामतनोत् ॥ ५० ॥ (आर्या)



---

१ 'एवाथ' इति ख-पाठ । २ 'विश्वे' इति ख-पाठ । ३ 'शस्तु' इति ख-पाठ । ४ 'राजायां' इति क-पाठ । ५ 'सङ्कोचेऽ ययस्तु सम्' इति ख-पाठ । ६ 'तदः' इति ख-पाठ । ७ 'क्रोधे' इति ख-पाठ । ८ 'तु नये काये च भाषणे' इति ख-पाठ । ९ 'हेतौ हूतौ' इति ख-पाठ ।

व्रणे वा पुंसि डं प्राहुः क्षुद्रजन्तौ वृथोदिते । मुस्तापत्रे करे डी स्त्री डोरोदन्तोऽन्त्यजे नरि ॥५४॥
ढो ढक्का निर्गुणे लास्ये गोमुखे ढ नपुसके । ढीर्वा [1]शुनी समाख्याता पक्षिभेदे स्त्रिया ढि वा ५५
प्रहारे चायुधे ढः स्याद् [2]घाते ढोऽपाठि पण्डितैः । श्वापदे दुर्जने मूढे वाद्यभेदे ढ उच्यते ॥५६॥
[3]कर्णभेदेऽप्यतिस्थूले गुदवातध्वनौ च ढुः । प्राभृते वेदनाया ढा ढः स्वभावे विमत्सरे ॥५७॥
णो निर्गुणे जपे योग्ये दुष्टे क्रोडे च तस्करे । पशुपुच्छे स्त्रीया णा स्त्री बृहन्माने च णुः पुमान्॥
सम्प्रत्यये तथा स्वार्थे णः कोणे चैकचक्षुषि । क्षीरे रणे धने धान्ये णीः पुमान् णीर्णियौ णियः ॥
समे स्वरे चये चौरे रणे णिश्चोभयात्मकः । तः [4]प्रेते निष्फले [5]शान्तौ पौनःपुन्येऽव्ययं च तु ॥
रङ्गे रागे तुलादण्डे [6]भीते तूर्यध्वनौ च ता । पूजायां तिः स्त्रिया तोके मतौ माने महाधने ॥६१॥
अविलम्बे जले क्लीबे तः स्तनौ तन्तुवायके । तौ च तौरे तदर्थेऽस्ति तोऽवसाने वयत्यपि॥६२॥
तौः तायौ ताय इत्येव रूप स्त्रीपुसयोरपि । ह्रस्वदीर्घौ तु भूभेदे प्रश्ने धान्येऽव्ययं द्वयम् ॥ ६३ ॥
थो मिथ्यावाचके श्रान्ते शोकेऽथारब्धवस्तुनि । निमग्ने चाथ गम्भीरे स्तोकार्थे पुनपुसकम्॥६४॥
मरुदेशे प्रदेशेऽपि थाऽऽन्तश्छलयोषिति । देवकूटे कषाये स्त्री दृढे परिवृढेऽपि था ॥ ६५ ॥
थुः पुंसि पर्वते द्रोणे व्रणे थुर्निन्दिते पुमान् । निष्ठीवने बले भूते थाऽऽन्तो भोजने भुवि ॥६६॥
ढो दाने पूजने क्षीणे दान्ते शौण्डे च पालके । देवे दीप्तौ दुरावर्षे दोर्भुजे दीर्घदर्शके ॥ ६७ ॥
दयाया दमने दीने दन्दशूकेऽपि दः स्मृतः । वधे च बन्धने बोधे बाले बीजे [8]बलोदिते ॥६८॥
विदोपेऽपि पुमानेष चालने चीवरे वरे । दाऽऽन्तो दिवि गङ्गाया कुले काले कृते च दा ॥६९॥
उपमाया च नैवेद्ये निर्नाथा वनिता च दा । दै स्त्रिया देवकन्याया दीनन्तो देवतर्पणे ॥ ७० ॥
धो विधाता धनं धर्मो धो गुह्ये गुह्यकेश्वरे । धश्वाश्वाधारभूतेऽपि वह्नौ वा देवधार्यके ॥ ७१ ॥
देशभेदे भृते भीतेऽधस्तथोपरि वर्तते । ध च पण्ढे च पारुष्ये वूर्वध्वा धुरि च स्मृतः ॥ ७२ ॥
भारे धेनौ च धाऽऽदिष्टा धीर्बुद्धौ वातुवत् स्त्रियाम् । ध्याने धेनौ धराया च [7]वैरैदन्तः पुमानयम् ॥
धृतौ पत्यावपि प्रोक्तो धुश्च धूर्तोऽतिधृष्टकः । वचने ध च तत् सेना धा स्त्रिया च तथाऽधिके ७४
धिः [9]संमये सुधावाधौ लोहे [10]चोरेऽपि चेष्यते । धोशब्दः केनिपातेऽप्सु प्राहुः पदविचक्षणाः ७५
नो नरे च सनाथेऽपि नोऽनर्थेऽपि [11]प्रदृश्यते । नृशब्दोऽपि नरे नाथे ना नरौ नर इत्यपि ॥७६॥
नलो इति निपातौ द्वौ नू दीर्घोऽपि तथोदित' । पृच्छाया नु वितर्के निर्निनिशब्दौ तथाऽव्ययम् ॥
नीबन्तो लक्ष्मवाच्य' स्यान्निर्नेतरि नियौ निय' । नु' स्तुतौ दीर्घह्रस्वः स्त्री नूर्नौश्च तरणौ स्त्रियाम् ७८
नृशब्दः पातके पुसि वायौ क्लीबे नु वारिणि । न ब्रह्मणि तथाऽनन्ते सानन्दे न च नन्दने ७९
पः सूर्ये शोषणे वह्नौ पाताले वरुणेऽनिले । परित्राणे क्षमे क्षेत्रे निपाते(ने) पङ्कसङ्कुले ॥ ८० ॥
उच्चदेशे स्थले पं स्यात् पू' पवित्रे पुवौ पुवः । पूः पृथिव्या वधूवत् स्यात् पौरपि स्त्री यथा च नौः ८१
पाऽऽबन्तः पी च पा लक्ष्मीपर्यायो धातुवच्च पाः। पाशब्दार्थे पुमानेष पध्या पः पोस्तथा च पाम्॥

---

१ ख-'शुचि'। २ ख-'पोते'। ३ ख-'कणरोगे'। ४ क-'प्रोते'। ५ ख-'शान्ते'।
६ क-'भाते'। ७ ख-'धाने'। ८ क-'जलोदिते'। ९ ख-'समभे'। १० ख-'धौरपि'। ११ क-'प्रदशने'।

अवसानेऽप्यवर्गेऽपि परब्रह्मण्यपीरितः । गस्तु गातरि गन्धर्वे शब्दसङ्गीतयोरपि ॥ २५ ॥
गौर्गणेशपशुस्वर्गवज्राशाभूदकेऽक्षिणि । वाण्यां किरणबाणास्त्रे पुलिङ्गोऽयमुदीरित' ॥ २६ ॥
आवन्तो गाऽवनीवाची गैः पुमान् शब्दगीतयोः । इरन्तो गीर्गिरा वाण्यां धातुवद् गाश्च गायकः ॥
मारणे मरणे घाते घण्टाया किङ्किणीरवे । शक्तौ मर्मरवे देवे घो मेत्रेऽन्यार्थवाचकः' ॥ २८ ॥
पुण्ये प्रवाहे पाखण्डे घ च घोरे घु रारवे । घिरिदन्तो घृते दीप्तौ घाऽऽवन्तो भूमिवाचकः २९
ङः शून्ये दानवेऽप्स्कायां निन्दायामाधिसादरे । सौदामिन्यां नदे धैर्ये सिन्धौ तद्विङ्गवाचकः॥३०॥
चः पुंसि चेतने चन्द्रे चौरेऽर्हा चारुदर्शने । इदन्तश्चिः स्त्रिया चुर्द्वा ज्ञाने चारे च पावके ॥३१॥
चाऽन्वाचयसमाहारेतरेतरसमुच्चये । समासा(ना?)र्थेऽव्यय चायमावन्तश्चा दिवि स्मृत ॥ ३२ ॥
छः सूर्ये सोमनैर्मल्ये छेदे स्वच्छे च ज्ञातरि । छन्दानुवर्तिनि प्रोक्तश्छाऽऽवन्तो निम्नगागिरोः३३
छोऽस्त्रियां लोहधाराया छोऽस्ति पुंसि परश्वधे । वानरे हरिणे छागे छिः पुंसि प्रोच्यते छले ३४
जो जेता ज च जीवेऽपि जुर्वेगे नभसि स्वके । जायाजनन्योर्जाऽऽवन्तः शय्यायामपि जारके३५
स्त्रिया जूर्गतिवाची स्याज्जापे शापेऽपि जिः पुमान् । ह्रस्वो दीर्घोऽपि जृशब्दो जरायां दुर्गतावपि३६
जी रेफान्तस्तदर्थे स्त्री जूर्जुवौ जुर इत्यपि । प्रादुर्भावे जवे जः स्याद् दाम्पत्ये ज च जन्मनि ३७
झशब्दः स्वपतौ शून्ये तथोर्ध्वक्षेपणेऽपि झः । विनष्टे विवरे भृङ्गे स्त्रिया झा तडिति स्मृता ३८
वने च भुवने झ स्यादेकान्ते सङ्गते च झम् । स्वद्रव्ये भगे भोगे विलासे सुन्दरी च झा ॥३९॥
अकस्माद्दर्शने शोके मूढास्त्रमोचने च झु' । झ इदन्त' स्त्रीलिङ्गो झिः सर्वधातुध्वनौ च झीः४०
झीर्झिरौ झिर इत्येव रूप हानौ जरार्थकः । ञो ज्ञाने गायनेऽज्ञाने घर्घरध्वनिते च ञः ॥ ४१ ॥
ञोऽर्धेन्दुमण्डले मन्त्रे प्राच्याज्ञा विन्मुनीन्दुजा' । निषेधे चञ्चले ञुः स्यान्निर्माणे ञीरिति ध्वनिः॥
टः स्थिरे ताडने त्रासे 'विश्वासेऽश्वे च पुंस्ययम् । टाऽऽनन्तो घटिकावाची पृथिव्यां ट करङ्कके॥
भूपायां च मणौ मेढ्रे टुः स्याद् भ्रष्टे टि पक्षिणि । पारत्रैणे टिशब्दोऽस्ति फटाया टा जटास्वपि॥
मुद्रोर्मिमहिलासु स्त्री टीवन्तः पटहेऽपि टम् । ठो महेशे महामन्त्रे मन्त्रिभूपाधिताण्डवे ॥ ४५ ॥
आसने शयने शून्ये तथाऽऽकाशे जलाशये । घटे चक्रे च मुद्राया कुण्डले भागवत्कचे ॥ ४६ ॥
'ठीवन्तो मत्स्यसङ्घाते ठावन्तः कर्णकोटरे । विलये विजये देवसेवने ठुः "प्रियार्पिते ॥ ४७ ॥
नखोच्छन्नकुचे काञ्च्या ठुः स्त्री कृत्रिमरोदने । ठेरेदन्तो वृथाहास्ये सूर्ये ठौर्ना श्रुतौ स्त्रियाम् ॥४८॥
वञ्चके वेषकारे ठ ठु बिन्दौ जलबुद्बुदे । ठशब्देऽन्येऽपि शब्दार्थास्तेनाय ठेति विस्मृतः ॥ ४९ ॥
डो भयङ्करनादेषु चन्द्रे चञ्चलयोषिति । जिह्वाया कुण्डलिन्या डा चण्डिकाभूतनाथयोः ॥५०॥
धातुवद् डूश्च हिंसाया वधे क्षेपे च डौर्द्वयोः । डूर्डुवौ डुव इत्येव डौडीवात्मपरस्य च ॥ ५१ ॥
भ्रान्ते सर्वंवधे बाले बलहीने वृथाकुले । पुंसि डुर्व्यर्थवाचाले सर्पे शापे च डू' स्त्रियाम् ॥ ५२ ॥
कालक्षेपे तथा दण्डे डी' पुंसि व्योमगामिनि । उत्पाते राजकीये ढः फेने दानेऽल्परोदने ॥५३॥

---

१ ख–'द्रतौ'। २ क–'वाम्बायां'। ३ क–'सर्पे सिद्धौ'। ४ ख–'नवे ज स्यादपत्ये'। ५ ख–'भागे विलासा'। ६ क–'झरार्थक'। ७ ख–'दाने'। ८ ख–'विश्वासे चैव'। ९ क–'टाऽऽबन्तः'। १० क–'ठाऽऽब न्तो'। ११ ख–'प्रियार्जिते'। १२ ख–'सन्त्यथास्ते नोच्यन्ते'। १३ ख–'सर्वबभ्रू०'।

व्रणे वा पुंसि ङं प्राहुः क्षुद्रजन्तौ घृथोदिते । मुस्तापत्रे करे डी स्त्री डोरोदन्तोऽन्त्यजे नरि ॥५४॥
ढो ढक्का निर्गुणे लास्ये गोमुखे ढं नपुसके । ढीर्गा शुनी समाख्याता पक्षिभेदे स्त्रियां ढि वा ५५
प्रहारे चायुधे ढः स्याद् घाते ढोऽपाठि पण्डितैः । श्वापदे दुर्जने मूढे वाद्यभेदे ढ उच्यते ॥५६॥
कर्णभेदेऽप्यतिस्थूले गुदवातध्वनौ च ढुः । प्राभृते वेदनायां ढा ढः स्वभावे विमत्सरे ॥५७॥
णो निर्गुणे जपे योग्ये दुष्टे क्रोडे च तस्करे । पशुपुच्छे स्त्रीया णा स्त्री वृहन्माने च णुः पुमान्॥
सम्प्रत्यये तथा स्वार्थे णः कोणे चैकचक्षुपि । क्षीरे रणे घने धान्ये णीः पुमान् णीर्णियौ णियः ॥
समे स्वरे चये चौरे रणे णिश्चोभयात्मकः । तः प्रेते निष्फले शान्तौ पौनःपुन्येऽव्यय च तु ॥
रङ्गे रागे तुलादण्डे भीते तूर्यध्वनौ च ता । पूजाया तिः स्त्रिया तोके मतौ माने महाधने ॥६१॥
अविलम्बे जले क्लीवे तः स्तनौ तन्तुवायके । तौ च तौरे तदर्थेऽस्ति तोऽवसाने वयस्यपि ॥६२॥
तौः तायौ ताय इत्येव रूप स्त्रीपुसयोरपि । ह्रस्वदीर्घौ तु भूभेदे प्रश्ने धान्येऽव्यय द्वयम् ॥ ६३ ॥
थो मिथ्यावाचके श्रान्ते शोकेऽथारब्धवस्तुनि । निमग्ने चाथ गम्भीरे स्तोकार्थे पुनपुसकम्॥६४॥
मरुदेशे प्रदेशेऽपि थाऽऽनन्तश्छलयोपिति । देवकूटे कपाये स्त्री दृढे परिवृढेऽपि था ॥ ६५ ॥
थुः पुसि पर्वते द्रोणे व्रणे थुर्निन्दिते पुमान् । निष्ठीवने बले भूते थाऽऽनन्तो भोजने भुवि ॥६६॥
दो दाने पूजने क्षीणे दान्ते शौण्डे च पालके । देवे दीप्तौ दुराधर्षे दोर्भुजे दीर्घदर्शके ॥ ६७ ॥
दयाया दमने दीने दन्दशूकेऽपि दः स्मृतः । वधे च बन्धने बोधे बाले बीजे बलोदिते ॥६८॥
विदोपेऽपि पुमानेप चालने चीवरे वरे । दाऽऽनन्तो दिवि गङ्गाया कुले काले कृते च दा ॥६९॥
उपमाया च नैवेद्ये निर्नाथा वनिता च दा । दै स्त्रिया देवकन्याया दीनन्तो देवतर्पणे ॥ ७० ॥
धो विधाता धन वर्मो धो गुह्ये गुह्यकेश्वरे । धश्चाश्वाधारभूतेऽपि वह्नौ वा देवधार्यके ॥ ७१ ॥
देशभेदे भृते भीतेऽधस्तथोपरि वर्तते । ध च पण्ढे च पारुष्ये धूर्वध्वा धुरि च स्मृतः ॥ ७२ ॥
भारे धेनौ च धाऽऽदिष्टा धीर्बुद्धौ धातुवत् स्त्रियाम् । ध्याने धेनौ धराया च धैरैदन्तः पुमानयम् ॥
धूर्तौ पत्यावपि प्रोक्तो धुश्च धूर्तोऽतिधृष्टकः । वचने ध च तत् सेना धा स्त्रिया च तथाऽधिके ७४
धिः संमये सुधावार्धौ लोहे चोरेऽपि चेष्यते । धोशब्दः केनिपातेऽप्सु प्राहुः पदविचक्षणाः ७५
नो नरे च सनाथेऽपि नोऽनर्थेऽपि प्रदृश्यते । नृशब्दोऽपि नरे नाथे ना नरौ नर इत्यपि ॥७६॥
ननो इति निपातौ द्वौ नू दीर्घोऽपि तथोदितः । पृच्छाया नु वितर्के निर्निनिशब्दौ तथाऽव्ययम् ॥
नीवन्तो लक्ष्मवाच्यः स्यान्निर्नेतरि नियौ नियः । नुः स्तुतौ दीर्घह्रस्वः स्त्री नूर्नौश्च तरणौ स्त्रियाम् ७८
नूशब्दः पातके पुसि वायौ क्लीवे नु वारिणि । न ब्रह्मणि तथाऽनन्ते सानन्दे न च नन्दने ७९
पः सूर्ये शोपणे वह्नौ पाताले वरुणेऽनिले । परित्राणे क्षमे क्षेत्रे निपाते(ने) पङ्कसङ्कुले ॥ ८० ॥
उच्चदेशे स्थले प स्यात् पूः पवित्रे पुवौ पुवः । पूः पृथिव्या वधूवत् स्यात् पौरपि स्त्री यथा च नौः ८१
पाऽऽनन्तः पी च पा लक्ष्मीपर्यायौ धातुवच्च पाः। पाशब्दार्थे पुमानेप पथ्या पः पोस्तथा च पाम्॥

---

१ ख–'शुचि'। २ ख–'पोते'। ३ ख–'कणरोगे'। ४ क–'प्रोते'। ५ ख–'शान्ते'।
६ क–'भाते'। ७ ख–'माने'। ८ क–'जलोदिते'। ९ ख–'समभे'। १० ख–'धौरपि'। ११ क–'मदशने'।

अवसानेऽप्यवर्गेऽपि परब्रह्मण्यपीरितः । गस्तु गातरि गन्धर्वे शब्दसङ्गीतयोरपि ॥ २५ ॥
गौर्गणेशपशुस्वर्गवज्राशाभूदकेऽक्षिणि । वाण्यां किरणबाणाङ्के पुलिङ्गोऽप्युदीरित' ॥ २६ ॥
आबन्तो गाऽवनीवाची गैः पुमान् शब्दगीतयो. । इदन्तो गीर्गिरा वाण्यां धातुवद् गाश्च गायकः ॥
मारणे मरणे घाते घण्टाया किङ्किणीरवे । शक्तौ सर्मरवे देवे घो मेत्रेऽन्यार्थवाचकः ॥ २८ ॥
पुण्ये प्रवाहे पाखण्डे घ च घोरे घु रौरवे । घिरिदन्तो घृते दीप्तौ घाऽऽबन्तो भूमिवाचकः २९
ङः शून्ये दानवेच्छायां निन्दायामाधिसादरे । सौदामिन्यां नदे वैर्य सिन्धौ तद्विभ्रवाचकः ॥३०॥
चः पुसि चेतने चन्द्रे चौरेऽर्हो चारुदर्शने । इदन्तश्चिः स्त्रिया बुद्धौ ज्ञाने चारे च पावके ॥३१॥
चाऽन्वाचयसमाहारेतरेतरसमुच्चये । समासा(ना?)र्थेऽव्यय चायमाबन्तश्चा टिवि स्मृतः ॥ ३२ ॥
छः सूर्ये सोमनैर्मल्ये छेदे स्वच्छे च ध्यातरि । छन्दानुवर्तिनि प्रोक्तश्छाऽऽबन्तो निम्नगागिरोः३३
छोऽस्त्रियां लोहधाराया छोऽस्ति पुसि परश्वधे । वानरे हरिणे छागे छिः पुसि प्रोच्यते छले ३४
जो जेता ज च जीवेऽपि जुर्वेगे नभसि स्वके । जायाजनन्योर्जाऽऽबन्तः शय्यायामपि जारके३५
स्त्रिया जूर्गतिवाची स्याज्ञापे शापेऽपि जिः पुमान् । ह्रस्वो दीर्घोऽपि जृशब्दो जरायां दुर्गतावपि३६
जी रेफान्तस्तदर्थ' स्त्री जूर्जुवौ जुव इत्यपि । प्रादुर्भावे जवे जः स्याद् दाम्पत्ये ज च जन्मनि ३७
झशब्दः सपतौ शून्ये तथोर्ध्वक्षेपणेऽपि झः । विनष्टे विवरे भृङ्गे स्त्रियां झा तडिति स्मृता ३८
वने च भुवने झ स्यादेकान्ते सङ्गते च झम् । स्तनद्रव्ये भगे भोगे विलासे सुन्दरी च झा ॥३९॥
अकस्माद्दर्शने शोके मूढास्रमोचने च झुः । झ इदन्तः स्त्रीलिङ्गो झिः सर्वधातुध्वनौ च झीः४०
झीर्झिरौ झिर इत्येव रूप हानौ जरार्थकः । ञो ज्ञाने गायनेऽज्ञाने घर्घरध्वनिते च ञः ॥ ४१ ॥
ञोऽर्धेन्दुमण्डले मन्त्रे धाच्याज्ञा विन्मुनीन्दुजाः । निषेधे चञ्चले ञुः स्यान्निर्माणे ञीरिति ध्वनिः॥
टः स्थिरे ताडने त्रासे 'विश्वासेऽश्वे च पुस्ययम् । टाऽऽनन्तो घटिकावाची पृथिव्या ट करङ्कके ॥
भूपायां च मणौ मेढ्रे टुः स्याद् भ्रष्टे टि पक्षिणि । पारस्त्रैणे टिशब्दोऽस्ति फटायां टा जटास्वपि ॥
मुद्रोमिमहिलासु स्त्री टीबन्तः पटहेऽपि टम् । ठो महेशे महामन्त्रे मन्त्रिभूपाधिताण्डवे ॥ ४५ ॥
आसने शयने शून्ये तथाऽऽकाशे जलाशये । घटे चक्रे च मुद्राया कुण्डले भागवत्कचे ॥ ४६ ॥
'ठीबन्तो मत्स्यसङ्घाते ठाबन्तः कर्णकोटरे । विलये विजये देवसेवने ठुः ''प्रियार्पिते ॥ ४७ ॥
नखोच्छिन्नकुचे काञ्च्या ठुः स्त्री कृत्रिमरोदने । ठेरेदन्तो वृथाहास्ये सूर्ये ठौनौ श्रुतौ स्त्रियाम् ॥४८॥
वञ्चके वेपकारे ठु ठु विन्दौ जलबुद्बुदे । ठशब्देऽन्येऽपि शब्दार्थास्तेनाय ठेति विस्मृतः ॥ ४९ ॥
डो भयङ्करनादेषु चन्द्रे चञ्चलयोषिति । जिह्वाया कुण्डलिन्यां डा चण्डिकाभूतनाथयोः ॥५०॥
धातुवद् डूश्च हिसाया वधे क्षेपे च डौर्द्वयो. । डूर्डुवौ डुव इत्येव डौर्डावात्मपरस्य च ॥ ५१ ॥
श्रान्ते सैर्ववधे बाले बलहीने वृथाकुले । पुसि ढुर्व्यर्थवाचाले सर्पे शापे च ढूः स्त्रियाम् ॥ ५२ ॥
कालक्षेपे तथा दण्डे ढी' पुसि व्योमगामिनि । उत्पाते राजकीये ढः फेने दानेऽल्परोदने ॥५३॥

---

१ ख–'द्युतौ' । २ क–'वाम्बायां' । ३ क–'सर्पे सिद्धौ' । ४ ख–'नचे ज स्यादपत्ये' । ५ ख–'भागे विलासा' । ६ क–'क्षराथक' । ७ ख–'दाने' । ८ ख–'विश्वासे चैव' । ९ क–'टाऽऽबन्तः' । १० क–'ठाऽऽबन्तो' । ११ ख–'प्रियार्जिते' । १२ ख–'सन्त्यथास्ते नोच्यन्ते' । १३ ख–'सर्ववधू०' ।

सः सोमे सोमपानेऽपि सूर्ये पक्षिणि तापसे । वृपे च सः सदानन्दे सा स्त्रिया संवने धने११२
यौवनेऽपि संमासे च वस्तुवृन्दे समाहृतम् । पूजाया सु निपातोऽस्ति सूर्वधूश्च मातरि॥११३॥
सोमसूः सूः सुवौ पुसि प्रसवार्ता नितम्बिनी । सं सिः पुसि परोक्षेऽपि सा च देवी सरस्वती॥
ह हर्षे चैव हिंसाया हीरे हारे हरौ च हः । हौस्त्यागे च रणे ज्यावः क्षः क्ष क्षेत्रे क्षये गृहे११५

इति श्रीविश्वशम्भुप्रणीता एकाक्षरनाममालिका समाप्ता ।

शके १७२३ दुर्मतिनामसवत्सरे माघशुद्धदशम्या गुरुवासरे तद्दिने वरखोपनामक-केशवसूनुवाळकृष्णाख्येन लिखितम् ॥ श्रीकृष्णार्पणमस्तु ॥

---

श्रीजिनप्रभसूरिविरचिता

# अनुयोगचतुष्टयव्याख्या ।

श्रीप्रवचनाय नमः ।

इह प्रवचने चत्वारोऽनुयोगा , तद्यथा—चरणकरणानुयोगो १, धर्मकथानुयोगो २, गणितानुयोगो ३, द्रव्यानुयोगश्च ४ । तत्राद्यः कालिकश्रुते ओघनिर्युक्त्यादौ च प्ररूप्यते । द्वितीय ऋषिभाषितोत्तराध्ययनषष्ठाङ्गादौ । तृतीय सूर्यप्रज्ञप्त्यादौ । चतुर्थो दृष्टिवादे । श्रीवज्रस्वामिन यावदपृथक्त्वानुयोग आसीत्, एकस्मिन्नेव सूत्रे चतुर्णामपि अनुयोगाना तदा व्याख्यानात् । ततोऽर्वाग् आर्यरक्षितादारभ्य पृथक्त्वानुयोग , प्राक् कथितप्रतिनियतसूत्रेषु पृथक् पृथक् तेषा प्ररूपणात् । तत्राभियुक्तविद्वच्छिष्याणा कथमेकत्रैव सूत्रे चत्वारोऽनुयोगा पूर्वैर्व्याख्यायन्ते स्मेति तत्कौतूहलपूरणार्थं चतुर्दशपूर्ववित्श्रीभद्रबाहुस्वामिप्रणीतावश्यकनिर्युक्ति(२३६)गाथाया अपृथग्विभागोपदर्शनवास्तवार्थाया चत्वारोऽपि ते यथाप्रज्ञ लेशतो दर्श्यन्ते । सा चेय गाथा—

"पउमाभवासुपूज्जा रत्तासससिपुप्फदत ससिगोरा ।
सुव्वयनेमी काला पासो मल्ली पियगाभा ॥"

अत्र प्रथमपादे गणितानुयोग , तत्र 'पउ' इति पौष , पौरादित्वात् औकारस्य अउ आदेशे आद्याक्षरद्वयेन पौष , 'मा' इति माघ , 'भ' इति भाद्रपद , आम्नायादेषा सितपक्षेऽकारप्रश्लेषात् 'अव' इत्यवमरात्रे तिथिह्रासे 'लुक्' ( सिद्ध० ८–१–१० ) इत्यकारलोपे पउमाभ(व) इति सिद्धम् ।

सम्प्रति फलमाह—

'असुपूज्जा' इति । ( 'सु' इति सुभिक्षम् ) असु–दुर्भिक्षम्, 'पू' इति पुहवीलोगा पुहवीसो वा तस्या 'ज्जा' इति ज्यानि –विनाश । तथा चाहु (                )—

---

१ ख–'समाख्याते' ।

भानुवत् पण्डिते पुः स्यात् पटहे पुरुपोत्तमे । पिः पुंसि पेण्डिते रागे सागरे सादरे दरे ॥८३॥
फः स्फारदर्शने देवे न्याये ज्ञाने च नीरघौ । फश्चायतनबीजे फ फले फ निष्फले ध्वनौ ॥८४॥
फाऽऽनन्तो मृगमारीचे फा फणा फ फणे च फाः । चक्रवर्तिनि फ श्रीत्रे लाभे लोभे विपर्यये ॥
मूर्ता मदने फ चार्के माहेन्द्रे जालके च फम् । फ भार्यायोपितोः फी स्यात् फूर्व रूवत् मुखाकुले ८६
घो दन्त्योष्ठ्यस्तयौष्ठ्योऽपि वरुणे वारुणे वरे । शोपणे पवने गन्धे वासोवृन्दे च वारिधौ ॥८७॥
वन्दने वदने वादे वेदनाया च वा स्त्रियाम् । झञ्झावाते तथा मन्त्रे सर्वमन्त्रेऽमृतार्थक' ॥ ८८ ॥
वी गतार्थे विशेपार्थे विनिपातश्च सादने । जनने पूजने कान्तौ तद्रूप वीर्वियौ वियः ॥ ८९ ॥
वीनन्तो वी नदीनाथे वावन्तो वा च वासने । धातुवद् वा च शब्दार्थे व वे वो वदिति स्मृतः ॥
भॅास्करे भा स्वरेऽपि स्याद् भाया भॅा भोगयोपिति । पितृभ्रातृपितृव्येषु भोऽतिभीते भयाकुले९१
भ नक्षत्रे भगे भोगे भीतौ भीः स्त्री भियौ भियः । भूः पुमान् वेदनायुक्ते भूर्भूमिः स्त्री भुवौ भुव' ॥
भाऽऽनन्तो धातुवच्चापि भापितार्थे भनाशयो' । वधूवद् भूर्धने भूः स्त्री भू सत्ताया द्वयोरपि ॥९३॥
मो मन्त्रे मन्दिरे माने सूर्ये चन्द्रे शिवे विधौ । मायाविनि वृथामन्त्रे मारणप्रतिदानयो' ॥ ९४ ॥
मं मौलौ मोघवृत्तौ चॅ माऽऽनन्तः स्त्री रॅमाऽम्बयो' । शुचि माने च मात्रा मा मा निपातो निषेधक
दीर्घह्रस्वौ मु मू शब्दौ बन्धनार्थे त्रिलिङ्गकौ । मीरीदन्तः प्रतीदाने हिंसाया मीर्मियौ मियः ॥
धातुवन्मा धने माने बन्धने मौर्यथाऽस्ति गौः । स्त्रीपुंसयोर्मिते मिः स्यात् प्रेरणे मैस्तथा रणे ९७
यः सूर्ये तारके चन्द्रे या रॅमामातृधातृपु । वायुवेगे जले य स्याद् याचके योऽतिकुत्सिते ॥९८॥
यो यातरि रुजालये शयने या च वाहने । युक्तौ च या च यात्राया यो यथार्थे स्त्रियां च या ॥
धातुवद् या च शब्दार्थे गमने निधनेऽशने । यॅामाहुर्योगायङ्गे च य संसारे सरित्पतौ ॥१००॥
रः सूर्येऽग्नौ धने कामे र जले रङ्गवेगयोः । रा रमा रमणी वाला र(:) तीक्ष्णे कर्कटे दृढे ॥१०१॥
रैशब्दोऽर्थे जले स्वर्णे रेऽर्थे रन्ध्रे च र स्मृतम् । रोदने वेदने च्छेदे रा दाने धातुवत् स्मृतः १०२
रु-रौ शब्दौ पुमांसौ द्वौ शम्भुशब्दार्थवाचकौ । री रणे रु भये क्लीव री च नारी पतिव्रता १०३
मेरोः परिभ्रमे भानौ रुः पुंसि रसने स्त्रियाम् । महेन्द्रे लोऽमृते गत्या ला च लक्ष्मीर्लमम्बरे १०४
लिः पुंसि लावशब्दे लीधातुवल्लवने त्रिपु । ल क्लीबे लोपनेऽपि स्यादपूर्णे ल प्रकीर्तितम् १०५
ला दाने धातुवल्ल च लानादाने ल आलये । आश्लेपे ल सुखे वादे दृश्ये लौश्चेति भाषितः १०६
लधातुवच्छेदने लौ स्त्री ला लीलाविलासयो' । उपालम्भे तथा लाभे लोभेऽपि लैर्दयापरे १०७
श' सूर्ये शोभने शीते श सुखे शा रमाम्बयो । आशीर्वादे च शीबन्त शः शशाङ्केऽच्छवारिणि ॥
रश्मौ शॅस्त्रे तथा स्वच्छे शो महेशे महार्णवे । पोऽतिरोपेऽपवर्गे पोऽप्यक्षरे सानुवेधसोः ॥१०९॥
नार्याश्लेपे सुखे प स्यात् पण्डितेऽपि पमादृतम् । पडूर्मिरहिते ष स्याज्जालके भेषजे च षम् ११०
सुखे दुःखे समे पोर्ना पुरनित्ये नृपोत्तमे । वृपस्यन्ती सती पा स्त्री नभोनक्षत्रयोरपि ॥ १११ ॥

---

१ क-'पीडिते रावे'। २ ख-'रुपाकुले'। ३ ख-'मृगारमक'। ४ ख-'भा भास्करे भास्वरे स्याद्'। ५ ख-'म'। ६ ख-'रमाऽर्थयो'। ७ क-'रमाया नृमातृषु'। ८ ख-'यामाहुर्योगियोगाय'। ९ ख-'रो नादे'। १० क-'रौ'। ११ ख-'दरे'। १२ ख-'शस्ते'।

सः सोमे सोमपानेऽपि सूर्ये पक्षिणि तापसे । वृषे च सः सदानन्दे सा स्त्रियां सेवने धने११२
यौवनेऽपि समासे च वस्तुवृन्दे समाहृतम् । पूजाया सु निपातोऽस्ति स्वर्वधूवच्च मातरि॥११३॥
सोमद्व' स्रः सुवौ पुंसि प्रसन्नार्ता नितम्बिनी । स सिः पुंसि परोक्षेऽपि सा च देवी सरस्वती॥
ह हर्षे चैव हिंसायां हीरे हारे हरौ च हः । हौस्त्यागे च रणे ज्याधः क्षः क्ष क्षेत्रे क्षये गृहे११५

इति श्रीविश्वशम्भुप्रणीता एकाक्षरनाममालिका समाप्ता ।

शके १७२३ दुर्मतिनामसंवत्सरे माघशुद्धदशम्यां गुरुवासरे तद्दिने वरवोपनामक-केशवसूनुबाळकृष्णाख्येन लिखितम् ॥ श्रीकृष्णार्पणमस्तु ॥

## श्रीजिनप्रभसूरिविरचिता

# अनुयोगचतुष्टयव्याख्या ।

श्रीप्रवचनाय नमः ।

इह प्रवचने चत्वारोऽनुयोगा, तद्यथा—चरणकरणानुयोगो १, धर्मकथानुयोगो २, गणितानुयोगो ३, द्रव्यानुयोगश्च ४ । तत्राद्य कालिकश्रुते ओघनिर्युक्त्यादौ च प्ररूप्यते । द्वितीय ऋषिभाषितोत्तराध्ययनषष्ठाङ्गादौ । तृतीय सूर्यप्रज्ञप्त्यादौ । चतुर्थो दृष्टिवादे । श्रीवज्रस्वामिन यावदपृथक्त्वानुयोग आसीत्, एकस्मिन्नेव सूत्रे चतुर्णामपि अनुयोगाना तदा व्याख्यानात् । ततोऽर्वाग् आर्यरक्षितादारभ्य पृथक्त्वानुयोग, प्राक् कथितप्रतिनियतसूत्रेषु पृथक् पृथक् तेषा प्ररूपणात् । तत्राभियुक्तविद्वच्छिष्याणा कथमेकत्रैव सूत्रे चत्वारोऽनुयोगा[1] पूर्वैर्व्याख्यायन्ते स्मेति तत्कौतूहलपूरणार्थं चतुर्दशपूर्ववित्श्रीभद्रबाहुस्वामिप्रणीतावश्यकनिर्युक्ति(३३६)गाथाया अपृथग्विभागोपदर्शनवास्तवार्थाया चत्वारोऽपि ते यथाप्रज्ञ लेशतो दर्श्यन्ते । सा चेय गाथा—

"पउमाभवासुपूज्जा रत्तासससिपुप्फदंत ससिगोरा ।
सुव्वयनेमी काला पासो मल्ली पियंगाभा ॥"

अत्र प्रथमपादे गणितानुयोग, तत्र 'पउ' इति पौष, पौरादित्वात् औकारस्य अउ आदेशे आद्याक्षरद्वयेन पौष, 'मा' इति माघ, 'भ' इति भाद्रपद, आम्नायादेषा सितपक्षेऽकारप्रश्लेषात् 'अव' इत्यवमरात्रे तिथिह्रासे 'लुक्' ( सिद्ध० ८–१–१० ) इत्यकारलोपे पउमाभ(व) इति सिद्धम् ।

सम्प्रति फलमाह—

'असुपूज्जा' इति । ( 'सु' इति सुभिक्षम् ) असु–दुर्भिक्षम्, 'पू' इति पुहवीलोगा पुहवीसो वा तस्या 'ज्जा' इति ज्यानि –विनाश । तथा चाहु (          )—

१ ख–'समाख्याते'।

भानुवत् पण्डिते पुः स्यात् पटरे पुरुषोत्तमे । पिः पुंसि पण्डिते रागे मागरे सादरे दरे ॥८३॥
फः स्फारदर्शने देवे न्याये ज्ञाने च नीरथी । फश्चायतनवीजे फ फले फ निष्फले ध्वनौ ॥८४॥
फाऽऽनन्तो मृगशारीचे फा फणा फ फणे च फाः । चक्रवर्तिनि फ क्लीवे लाभे लोभे विपर्यये ॥
भूता मदने फ चार्के माहेन्द्रे जालके च फम् । फ भार्यायोषितोः फी स्यात् फूर्व ऋवत् मुखाकुले ८६
वो दन्त्योष्ठ्यस्तथौष्ठ्योऽपि वरुणे वारुणे वरे । शोषणे पवने गन्धे वासोवृन्दे च वारिधौ ॥८७॥
वन्दने वदने वादे वेदनाया च वा स्त्रियाम् । झञ्झावाते तथा मन्त्रे सर्वमन्त्रेऽमृतार्थक ॥ ८८ ॥
वी गतार्थे विशेपार्थे विनिपातश्च खादने । जनने पूजने कान्तौ तद्रूप वीर्वियौ वियः ॥ ८९ ॥
वीनन्तो वी नदीनाथे घावन्तो वा च वासने । धातुवद् वा च शब्दार्थे व वे वो वदिति स्मृतः ॥
भास्करे भा स्वरेऽपि स्याद् माया भा भोगयोषिति । पितृभ्रातृपितृव्येषु भोऽतिभीते भयाकुले९१
भ नक्षत्रे भगे भोगे भीता भीः स्त्री भियौ भिय । भूः पुमान् वेदनायुक्ते भूर्भूमिः स्त्री भुवौ भुवः॥
भाऽऽनन्तो धातुवच्चापि भापितार्थे भवाशयोः । वधूवद् भूर्धने भूः स्त्री भू सत्ताया द्वयोरपि॥९३॥
मो मन्त्रे मन्दिरे माने सूर्ये चन्द्रे शिवे विधौ । मायाविनि वृथामन्त्रे मारणप्रतिदानयो ॥ ९४ ॥
म मौलौ मोघवृत्तौ च माऽऽनन्तः स्त्री रमाऽम्बयोः । श्रुवि माने च मात्रा मा मा निपातो निषेधक
दीर्घहस्वौ मु मू शब्दौ बन्धनार्थे त्रिलिङ्गकौ । मीरीदन्तः प्रतीदाने हिंसाया मीर्मियौ मियः ॥
धातुवन्मा धने माने वन्धने मौर्यथाऽस्ति गौ । स्त्रीपुंसयोर्मिते मिः स्यात् प्रेरणे मैस्तथा रणे ९७
य सूर्ये तारके चन्द्रे या रमामातृधातृषु । वायुवेगे जले य स्याद् याचके योऽतिकुत्सिते ॥९८॥
यो यातरि रुजालग्ने शयने या च वाहने । युक्तौ च या च यात्राया यो यथार्थे स्त्रियां च या ॥
धातुवद् या च शब्दार्थे गमने निधनेऽशने । यामाहुर्यागायङ्के च य ससारे सरित्पतौ ॥१००॥
रः सूर्येऽग्नौ धने कामे र जले रङ्गवेगयोः । रा रमा रमणी वाला र(:) तीक्ष्णे कर्कटे दृढे ॥१०१॥
रैशब्दोऽर्थे जले स्वर्णे रेऽर्थे रन्ध्रे च र स्मृतम् । रोदने वेदने च्छेदे रा दाने धातुवत् स्मृतः १०२
रु-रौ शब्दौ पुंसासौ द्वौ शम्भुशब्दार्थवाचकौ । री रणे रु भये क्लीव री च नारी पतिव्रता १०३
मेरोः परिभ्रमे भानौ रुः पुंसि रसने स्त्रियाम् । महेन्द्रे लोऽमृते गत्या ला च लक्ष्मीर्लमम्बरे १०४
लिः पुंसि लावशब्दे लीर्धातुवल्लवने त्रिषु । ल क्लीवे लोपनेऽपि स्यादपूर्णे ल प्रकीर्तितम् १०५
ला दाने धातुवल्ल च लानादाने ल आलये । आश्लेषे ल सुखे वादे दृश्ये लौश्चेति भाषितः १०६
लूधातुवच्छेदने लौ स्त्री ला लीलाविलासयोः । उपालम्भे तथा लाभे लोभेऽपि लैर्दयापरे १०७
शः सूर्ये शोभने शीते श सुखे शा रमाम्बयो । आशीर्वादे च शीनन्त शः शशाङ्केऽच्छवारिणि ॥
रश्मौ शैस्त्रे तथा स्वच्छे शो महेशे महार्णवे । पोऽतिरोपेऽपवर्गे षोऽप्यक्षरे सानुवेधसोः ॥१०९॥
नार्याश्लेषे सुखे ष स्यात् पण्डितेऽपि षमादृतम् । षड्भिरहिते ष स्याज्जालके भेषजे च षम् ११०
सुखे दुःखे समे पोर्ना पुरनित्ये नृपोत्तमे । वृषस्यन्ती सती षा स्त्री नभोनक्षत्रयोरपि ॥ १११ ॥

१ क-'पीडिते रावे'। २ ख-'रुपाकुले'। ३ ख-'मृगात्मक'। ४ ख-'भा भास्करे भास्वरे स्याद्'। ५ ख-'म'। ६ ख-'रमाऽर्धयो'। ७ क-'रमाया नृमातृषु'। ८ ख-'यामाहुर्योगियोगाश्च'। ९ ख-'रो नादे'। १० क-'रौ'। ११ ख-'दरे'। १२ ख-'शस्ते'।

( गा० २५८ ) इत्यादि । इति धर्मकथानुयोग' ॥ २ ॥

अथ तृतीयपादे द्रव्यानुयोग प्रतन्यते—

स च द्विधा प्रसिद्ध समयविदाम्—प्रमाणोपपत्तिभिर्वस्तुव्यवस्थापनं, रूप्यस्वर्णसिद्ध्यादिप्ररूपण च । तद् द्वितयमपि दृष्टिवादे प्रकटितम् । तद्दिङ्मात्र चेदम्—

'सु' इति सूते क्विपि सू–उत्पाद , व्ययो–विगम', 'णे' इति नैयत्यं नैत्यं वा ध्रौव्यमिति यावत् 'ह्रस्वः सयोगे' ( सिद्ध० १–४–८४ ) इति कृते सुवय 'ऐत एत्' ( सिद्ध० ८[२]–४–३४३) इति कृते एतेषा 'मी' इति मीलनं–युक्त ततश्चोत्पादव्ययध्रौव्यात्मक वस्तु सत् इति प्रतिज्ञा । हेतुमाह–'काला' कलन काल प्रतीयमानत्व तस्मात् कालात्, तथैव सम्प्रतीयमानत्वात् इति । अन्यथाऽनुपपन्नत्वैकलक्षणो हि हेतु प्रमाणम्, अतोऽन्तर्व्याप्त्यैव साध्यसिद्धेर्न दृष्टान्तरूपा वहिर्व्याप्तिरुपन्यस्ता । तत्र घटे मृत्पिण्ड-स्थासक-कोश कुशूलादिपर्यायाणा विनाशो घटाक्ष(ख्य)पर्यायोत्पादो मृद्रव्य चान्वयीति त्रयात्मकसिद्धेर्दिक् । एवमुत्फण विफणावस्थानुयायि सर्पत्वम्, दुग्ध-दध्याद्यनुवृत्ति गोरसत्वम्, कटक कुण्डलादिपर्यायेष्वनुगामि स्वर्णद्रव्यत्वम्, धर्मा-ऽधर्मा-ऽऽकाशादिषु द्रव्येष्वपि तत्तदवच्छेदकोपाधिसम्बन्धात् त्रयात्मक वस्तु भावनीयम् ।

आत्मनि तु ज्ञानदर्शनादिगुणहर्षामर्षोदासीन्यसुरनरतिर्यङ्नरकादिपर्यायापगमेऽप्यात्मद्रव्यैक्यात् तत् सुप्रतीतमेव । नहि निराधारावुत्पादव्ययपर्यायौ व्यवस्थितेष्वेतेषु, तस्मात् अन्वयि द्रव्यमेष्टव्यम्, कूटस्थनित्यस्य निष्प्रमाणकत्वात् वन्धमोक्षाद्यसङ्गतेश्च ।

"द्रव्य पर्यायवियुत पर्याया द्रव्यवर्जिता ।
क्व कदा केन किंरूपा दृष्टा मानेन केन वा ? ॥"[3]

इति वचनात् ।

अथ द्वितीयप्रकारेण द्रव्यानुयोग प्र(क)थ्यते—

'सुव' त्ति शुल्बम्, अकारप्रश्लेपात् अय –श्लेपण टङ्कण । 'ने' इति नेपाली–कुनटी नेत्राञ्जन च खापरीया । 'मी' इति मिडोहर तस्स 'इ' इति इन्द्रिय–वीजम् । 'मी' पारद इत्यर्थ । 'क' इति कन्दः–सूरण । "अर्शोघ्न सूरण कन्द " इति ( अमर० का० २, श्लो० १५७ ) वचनात् । आल–हरितालम् । 'अ' इति अशनि –वज्र –स्वरु सन्धौ 'सुवयनेमी काला' । तथा च पूज्या —

---

१ "जावाऽऽऊ सावसेस जाव य थोवो पि अत्थि ववसाओ ।
ताव करिज्ज–प्पहिय मा ससिराया व सोइहिसि ॥ २५८ ॥"
[ यावदायु सावशेष यावच्च स्तोकोऽप्यस्ति व्यवसाय ( चित्तोत्साह )।
तावत् कुर्यादात्महित मा शशिराजेव शोचिष्यति ॥ ]

२ आर्हतमतप्रभाकरकार्यालये (पुण्यपत्तने) मुद्रिते पुस्तके तु ८, १, १४८ इति सूत्राङ्क ।

३ इद पद्य विद्यते तत्त्वार्थाधिगमसूत्रस्य श्रीसिद्धसेनगणिकृतटीकाया ( पृ ३७८ )।

"पोसे मह भद्दवए सुद्धे पक्खम्मि जा तिही पडइ ।
तत्तिहितुल्ले मासे निवमरणं अहव दुब्भिक्खं ॥"

अन्ये त्वेवमाहुः ( )—

"भाद्रपदपौषमाघे सितपक्षे पतति या तिथिस्तस्याः ।
द्विगुणदिनैर्नृपमरण यदि वा दुर्भिक्षमतिरौद्रम् ॥"

इति गणितानुयोग ॥ १ ॥

अथ द्वितीयपादे धर्मकथानुयोग· प्रतीयते—

'र' इति रटति–शोचति त्रस्यतेऽस्मादिति त्रासो–भयजनक , त्रासहेतुत्वात् वा त्रास "नड्वलोदक पादरोग " ( ) इतिवत् , स चासौ असिः–असिपत्रनामा पुष्पदो–वृक्षः त्रासासिपुष्पद 'लुक्' ( सिद्ध० ८–१–१० ) इत्यकारलोपे त्राससिपुष्पद इति सिद्धम् । अथवा सि इति सिंवलिनामा रुक्खो "सालेत्यादि रूक्षागमौ पुष्पद " इति (अभि०का० ४, श्लो० १८० ) वचनात् पुष्पदशब्दो वृक्षवाची, तस्य अन्ते–समीपे तत्तले स्थित इति गम्यम् । सामर्थ्यात् नरके इति गम्यते । आर्पत्वाद् विभक्तिलुक् प्राकृतत्वात् 'स' इति द्विर्भाव । कोऽसौ रटति इत्याह–'ससिगोरा' शशिनामा गोराट्–पृथ्वीपतिः 'अन्त्य-व्यञ्जनस्य' ( सिद्ध० ८–१–११ ) इति ट्लुक् । आख्यानक चोपदेशमालावृत्तितो ज्ञेयम् । तथा च तत्सूत्रम्–"नरयत्थो ससिराया" ( गा० २५६ ) इत्यादि । भ्रातु' प्रतिवचन चेदम्–"को तेण जीव" (गा० २५७) इत्यादि । "जावाऽऽऊ सावसेस"

---

१ छाया—

पौषे माघे भाद्रपदे शुक्ले पक्षे या तिथिः पतति ।
तत्तिथितुल्ये मासे नृपमरणमथवा दुर्भिक्षम् ॥

२ इत्यादिशब्देन अनोकह–गच्छ–पादप–नगा ज्ञेया । सम्पूर्ण पद्य त्वेवम्—

"वृक्षोऽग शिखरी च शाखिफलदावद्रिर्हरिद्रुद्रुमो
जीर्णो द्रुर्विटपी कुटः क्षितिरुहः कारस्करो विष्टर ।
नन्द्यावर्तकरालिकौ तरुवसू पर्णी पुलाक्यङ्घ्रिप
सालानोकहगच्छपादपनगा रूक्षागमा पुष्पद ॥"

३–४ एतद्गाथाद्वितय तच्छाया चैवम्—

"नरयत्थो ससिराया बहु भणइ देहलालणासुहिओ ।
पडिओसि भए भाउअ ! तो मे जाएह त देह ॥ २५६ ॥"
[ नरकस्थ शशिराजो बहु भणति देहलालनसुखित ।
पतितोऽसि भये भ्रात ! तन्मे यातय त देहम् ॥ ]
"को तेण जीवरहिएण सपय जाइएण हुज्ज गुणो ? ।
जइसि पुरा जायतो तो नरए नेव निवडतो ॥ २५७ ॥"
[ कस्तेन जीवराधकेन साम्प्रत पीडितेन भवेद् गुण ? ।
यद्यसि पुरा यातयन् तदा नरके नैव निपतन् ॥ ]

( गा० २५८ ) इत्यादि । इति धर्मकथानुयोग. ॥ २ ॥

अथ तृतीयपादे द्रव्यानुयोगः प्रतन्यते—

स च द्विधा प्रसिद्ध' समयविदाम्—प्रमाणोपपत्तिभिर्वस्तुव्यवस्थापन, रूप्यस्वर्णसिद्ध्यादिप्ररूपण च । तद् द्वितयमपि दृष्टिवादे प्रकटितम् । तद्दिङ्मात्र चेदम्—

'सु' इति सूते क्विपि सू–उत्पाद , व्ययो–विगम , 'णे' इति नैयत्य नैत्य वा ध्रौव्यमिति यावत् 'ह्रस्व' सयोगे' ( सिद्ध० १–४–८४ ) इति कृते सुवय 'ऐत एत्' ( सिद्ध० ८[2]–४–३४३) इति कृते एतेषा 'मी' इति मीलनं–युक्त ततश्चोत्पादव्ययध्रौव्यात्मक वस्तु सत् इति प्रतिज्ञा । हेतुमाह–'काला' कलन काल प्रतीयमानत्व तस्मात् कालात्, तथैव सम्प्रतीयमानत्वात् इति । अन्यथाऽनुपपन्नत्वैकलक्षणो हि हेतु' प्रमाणम्, अतोऽन्तर्व्याप्त्यैव साध्यसिद्धेर्न दृष्टान्तरूपा बहिर्व्याप्तिरुपन्यस्ता । तत्र घटे मृत्पिण्ड-स्थासक-कोश कुशूलादिपर्यायाणा विनाशो घटाक्ष(रूय)पर्यायोत्पादो मृद्द्रव्य चान्वयीति त्रयात्मकसिद्धेर्दिक् । एवमुत्फण विफणावस्थानुयायि सर्पत्वम्, दुग्ध-दध्याद्यनुवृत्ति गोरसत्वम्, कटक-कुण्डलादिपर्यायेष्वनुगामि स्वर्णद्रव्यत्वम्, धर्मा ऽधर्मा-ऽऽकाशादिषु द्रव्येष्वपि तत्तदवच्छेदकोपाधिसम्बन्धात् त्रयात्मक वस्तु भावनीयम् ।

आत्मनि तु ज्ञानदर्शनादिगुणहर्षामर्षौदासीन्यसुरनरतिर्यङ्नरकादिपर्यायापगमेऽप्यात्मद्रव्यैक्यात् तत् सुप्रतीतमेव । नहि निराधारावुत्पादव्ययपर्यायौ व्यवस्थितेष्वेतेषु, तस्मात् अन्वयि द्रव्यमेष्टव्यम् , कूटस्थनित्यस्य निष्प्रमाणकत्वात् बन्धमोक्षाद्यसङ्गतेश्च ।

"द्रव्य पर्यायवियुत पर्याया द्रव्यवर्जिता ।
क्व कदा केन किरूपा दृष्टा मानेन केन वा ? ॥"[3]

इति वचनात् ।

अथ द्वितीयप्रकारेण द्रव्यानुयोग प्र(क)थ्यते—

'सुव' त्ति शुल्वम्, अकारप्रश्लेषात् अय –श्लेषण टङ्कण । 'ने' इति नेपाली–कुनटी नेत्राञ्जन च खापरीया । 'मी' इति मिडोहर तस्स 'इ' इति इन्द्रिय–बीजम् । 'मी' पारद इत्यर्थ । 'क' इति कन्दः–सूरण । "अर्शोघ्न सूरण' कन्द " इति ( अमर० का० २, श्लो० १५७ ) वचनात् । आल–हरितालम् । 'अ' इति अशनिः–वज्र –स्वरु सन्धौ 'सुव यनेमी काला' । तथा च पूज्या —

---

1 "जावाऽऽऊ सावसेस जाव य थोवो पि अत्थि ववसाओ ।
ताव करिज्ज–प्पहिय मा ससिराया व सोइहिसि ॥ २५८ ॥"
[ यावदायु सावशेष यावच्च स्तोकोऽप्यस्ति व्यवसाय ( चित्तोत्साह ) ।
तावत् कुर्यादात्महित मा शशिराजेव शोचिष्यति ॥ ]

2 आर्हतमतप्रभाकरकार्यालये (पुण्यपत्तने) मुद्रिते पुस्तके तु ८, १, १४८ इति सूत्राङ्क ।

3 इद पद्य विद्यते तत्त्वार्थाधिगमसूत्रस्य श्रीसिद्धसेनगणिकृतटीकाया ( पृ ३७८ ) ।

"पोसे मह भद्दवए सुद्धे पक्खम्मि जा तिही पडइ ।
तत्तिहितुल्ले मासे नियमरण अहय दुब्भिक्खं ॥"

अन्ये त्वेवमाहुः ( )—

"भाद्रपदपौषमाघे सितपक्षे पतति या तिथिस्तस्याः ।
द्विगुणदिनैर्नृपमरण यदि वा दुर्भिक्षमतिरौद्रम् ॥"

इति गणितानुयोग ॥ १ ॥

अथ द्वितीयपादे धर्मकथानुयोग' प्रतीयते—

'र' इति रटति–शोचति त्रस्यतेऽस्मादिति त्रासो–भयजनकः, त्रासहेतुत्वात् वा त्रास· "नड्वलोदक पादरोग " ( ) इतिवत्, स चासौ असिः–असिपत्रनामा पुप्पदो–वृक्षः त्रासासिपुप्पद 'लुक्' ( सिद्ध० ८–१–१० ) इत्यकारलोपे त्राससिपुप्पद इति सिद्धम् । अथवा सि इति सिंवलिनामा रुक्खो "सालेत्यादि रूक्षागमौ पुप्पद " इति (अभि०का० ४, श्लो० १८० ) वचनात् पुप्पदशब्दो वृक्षवाची, तस्य अन्ते–समीपे तत्तले स्थित इति गम्यम् । सामर्थ्यात् नरके इति गम्यते । आर्पत्वाद् विभक्तिलुक् प्राकृतत्वात् 'त्ता' इति द्विर्भाव । कोऽसौ रटति इत्याह–'ससिगोरा' शशिनामा गोराट्–पृथ्वीपतिः 'अन्त्य-व्यञ्जनस्य' ( सिद्ध० ८–१–११ ) इति ट्लुक् । आख्यानक चोपदेशमालावृत्तितो ज्ञेयम् । तथा च तत्सूत्रम्–"नरयत्थो ससिराया" ( गा० २५६ ) इत्यादि । भ्रातुः प्रतिवचन चेदम्–"को तेण जीव" (गा० २५७) इत्यादि । "जावाऽऽऊ सावसेस"

---

१ छाया—

पौषे माघे भाद्रपदे शुद्धे पक्षे या तिथिः पतति ।
तत्तिथितुल्ये मासे नृपमरणमथवा दुर्भिक्षम् ॥

२ इत्यादिशब्देन अनोकह–गच्छ–पादप–नगा ज्ञेया । सम्पूर्ण पद्य त्वेवम्—

"वृक्षोऽग शिखरी च शाखिफलदावद्रिहरिद्रुद्रुमो
जीर्णो द्रुर्विटपी कुटः क्षितिरुह कारस्करो विष्टर ।
नन्द्यावर्त्तकरालिकौ तरुवसू पर्णी पुलाक्यङ्घ्रिपः
सालानोकहगच्छपादपनगा रूक्षागमौ पुष्पद ॥"

३–४ एतद्गाथाद्वितय तच्छाया चैवम्—

"नरयत्थो ससिराया बहु भणई देहलालणासुहिओ ।
पडिओमि भए भाउअ ! तो मे जाएह त देह ॥ २५६ ॥"
[ नरकस्थ शशिराजो बहु भणति देहलालनसुखित ।
पतितोऽस्मि भये भ्रात ! तन्मे यातय त देहम् ॥ ]
"को तेण जीवरहिएण सपय् जाइएण हुज्ज गुणो ? ।
जइसि पुरा जायतो तो नरए नेव निवडतो ॥ २५७ ॥"
[ कस्तेन जीवरहितेन साम्प्रत पीडितेन भवेद् गुण ? ।
यद्यसि पुरा यातयन् तदा नरके नैव निपतन् ॥ ]

( गा० २५८ ) इत्यादि । इति धर्मकथानुयोग ॥ २ ॥

अथ तृतीयपादे द्रव्यानुयोगः प्रतन्यते—

स च द्विधा प्रसिद्ध' समयविदाम्—प्रमाणोपपत्तिभिर्वस्तुव्यवस्थापन, रूप्यस्वर्णसिद्ध्यादिप्ररूपण च । तद् द्वितयमपि दृष्टिवादे प्रकटितम् । तद्दिङ्मात्र चेदम्—

'सु' इति सूते· क्विपि सू–उत्पाद , व्ययो–विगम', 'णे' इति नैयत्यं नैत्यं वा ध्रौव्यमिति यावत् 'ह्रस्व सयोगे' ( सिद्ध० १–४–८४ ) इति कृते सुव्वय 'एेत एत्' ( सिद्ध० ८[2]–४–३४३) इति कृते एतेपा 'मी' इति मीलनं–युक्त ततश्चोत्पादव्ययध्रौव्यात्मक वस्तु सत् इति प्रतिज्ञा । हेतुमाह–'काला' कलन काल प्रतीयमानत्व तस्मात् कालात्, तथैव सम्प्रतीयमानत्वात् इति । अन्यथाऽनुपपन्नत्वैकलक्षणो हि हेतु' प्रमाणम्, अतोऽन्तर्व्याप्त्यैव साध्यसिद्धेर्न दृष्टान्तरूपा वहिर्व्याप्तिरुपन्यस्ता । तत्र घटे मृत्पिण्ड-स्थासक-कोश कुशूलादिपर्यायाणा विनाशो घटाक्ष(ख्य)पर्यायोत्पादो मृद्द्रव्य चान्वयीति त्रयात्मकसिद्धेर्दिक् । एवमुत्फण-विफणावस्थानुयायि सर्पत्वम्, दुग्ध-दध्याद्यनुवृत्ति गोरसत्वम्, कटक-कुण्डलादिपर्यायेष्वनुगामि स्वर्णद्रव्यत्वम्, धर्मा ऽधर्मा-ऽऽकाशादिपु द्रव्येष्वपि तत्तदवच्छेदकोपाधिसम्वन्धात् त्रयात्मक वस्तु भावनीयम् ।

आत्मनि तु ज्ञानदर्शनादिगुणहर्पामर्षोदासीन्यसुरनरतिर्यङ्नरकादिपर्यायापगमेऽप्यात्मद्रव्यैक्यात् तत् सुप्रतीतमेव । नहि निराधारावुत्पादव्ययपर्यायौ व्यवस्थितेष्वेतेपु, तस्मात् अन्वयि द्रव्यमेष्टव्यम् , कूटस्थनित्यस्य निष्प्रमाणकत्वात् वन्धमोक्षाद्यसङ्गतेश्च ।

"द्रव्य पर्यायवियुत पर्याया द्रव्यवर्जिता ।
क्व कदा केन किरूपा दृष्टा मानेन केन वा ? ॥"[3]

इति वचनात् ।

अथ द्वितीयप्रकारेण द्रव्यानुयोग प्र(क)थ्यते—

'सुव' त्ति शुल्वम्, अकारप्रश्लेपात् अय –श्लेपण टङ्कण । 'ने' इति नेपाली–कुनटी नेत्राञ्जन च खापरीया । 'मी' इति मिडोहर' तस्स 'इ' इति इन्द्रिय–वीजम् । 'मी' पारद इत्यर्थ । 'क' इति कन्दः–सूरण । "अर्शोघ्न सूरण कन्द " इति ( अमर० का० २, श्लो० १५७ ) वचनात् । आल–हरितालम् । 'अ' इति अशनि –वज्र –स्वरु सन्धौ 'सुवयनेमी काला' । तथा च पूज्या —

---

१ "जावाऽऽऊ सावसेस जाव य थोवो पि अत्थि ववसाओ ।
ताव करिज्ज–प्पहिय मा ससिराया व सोइहिसि ॥ २५८ ॥"
[ यावदायु सावशेप यावच्च स्तोकोऽप्यस्ति व्यवसाय ( चित्तोत्साह ) ।
तावत् कुर्यादात्महित मा शशिराजेव शोचिप्यति ॥ ]

२ आर्हतमतप्रभाकरकार्यालये (पुण्यपत्तने) मुद्रिते पुस्तके तु ८, १, १४८ इति सूत्राङ्क ।

३ इद पद्य विद्यते तत्त्वार्थाधिगमसूत्रस्य श्रीसिद्धसेनगणिकृतटीकाया ( पृ ३७८ ) ।

"खरटमहासमतुल्ल वज्जीखीरेण भावियं बहुसो ।
निग्गीवोयरपक्क हवेइ कंदुज्जल सुध्व ॥"

आम्नायस्त्वय रस्स्यकल्पद्रुमेऽस्माभि प्रकटित' । इति द्रव्यानुयोग' ॥ ३ ॥

अथ चरणकरणानुयोगस्य दिग् दर्श्यते—

'प' इति पडिलेहण 'आ' इति आदि सर्न्धा पा। अनेन–

"पडिलेहणा पमज्जण भिक्खायरिलोयभुजणा चेव ।
पत्तगधुवणवियारा थडिलआवस्सयाइ च ॥"

इति (विचारसारे गा० २५१) गाथोक्तप्रतिलिखनादिदशविधचक्रवालसमाचारी सूच्यते इति प्रतिलेखनादिसमाचारी ।

'सोम' इति सौम्यत्व प्रशान्तवाहितारूपम्, तदुभयमपि अलियति–सेवन्ते पासोमल्ली । एतेन विशेपणेन क्रियाशुद्धिर्भावशुद्धिश्च क्रमेणोक्ता । तथा 'पियगा' प्रियाणि–अभीष्टानि सूत्रार्थपाठावबोधाभ्या अङ्गानि–आचारादीनि द्वादश येषा ते प्रियाङ्गा । एतेन पदेन ज्ञानसम्पन्नत्वमभिहितम् । एवविधा 'भा' इति भावसाधवो भवन्ति । इति चरण करणानुयोग ॥ ४ ॥

व्याख्यातमस्या गाथाया–मनुयोगचतुष्टयम् ।
तुष्टये कौतुकवता, श्रीजिनप्रभसूरिभि ॥

अथवा सकलाऽपीय गाथा प्रत्येक चतुर्भिरनुयोगैर्व्याख्यायते—

'पउमाभवासुपुज्जा' इति गणितानुयोगप्रथमपाद पूर्वं व्याकृत । द्वितीयपादस्त्वेव ज्ञेयम्–'पुप्फदत'त्ति आर्षत्वाद् विभक्तिलुपि पुप्पदन्तयो–सूर्यचन्द्रयो आकारप्रश्लेषात् 'असंसि' इति अस्वश्रियो, न विद्यते स्वा–आत्मीया श्रीर्ययोस्तौ अस्वश्रियौ तयो । यदा किल सूर्यस्य स्वा श्री रक्तवर्णत्वलक्षणा न भवति, किन्तूदये चन्द्रवत् श्वेता–निस्तेजस्का वा, तथा चेन्दो स्वा श्रीर्न भवति, किन्तु शशी रुधिररक्तो दृश्यते तदा 'गौरा' इति तदा गवि–पृथिव्या राजान 'रत्तासंसि' इति रक्त–सुभटरुधिर आस्ये–मुखे यस्य स रक्तास्य, तथाविधोऽसि–खड्गो येषा ते तथा भवन्ति राजान, परस्पर युध्यन्ते इत्यर्थ । अयमपि गणितानुयोग । तथा सह और्वेण–पातालकलशलक्षणेन वडवानलेन वर्तन्ते ये ते सौर्वा, असाधारणविशेषणात् समुद्रास्तैश्च सागरोपमा लक्ष्यन्ते, तै अयन–सङ्ख्यापरिज्ञान ययोर्वर्तते । तौ कौ? 'अमी' इति प्राकृते द्विधा व्युत्पत्ति, सिद्धावस्थया साध्यावस्थया च । तत्र सिद्धावस्थामाश्रित्य 'अमी' इति कोऽर्थ ? अमू, द्विवचनस्य प्राकृते बहुवचनम्, अमू

१–२ छाया–

खरट(?)महासमतुल्य वज्री(?)क्षीरेण भावित बहुश ।
निर्ग्रीवोदरपक्व भवति कन्दोज्ज्वल ॥

प्रतिलेखना प्रमार्जन भिक्षाचरीलोचभुञ्जना चैव ।
पात्रकधावनविचारा स्थण्डिलावश्यकानि च ॥

चक्रारकवद् विपरिवर्त्तमानौ । 'काला' इति कालौ–अवसर्पिण्युत्सर्पिण्याख्यौ, तथाहि–प्रथमोऽरकः सुषमसुषमाख्यः, तस्य मानं चतस्रः सागरोपमकोटाकोट्यः इत्यादिविंशतिकोटाकोटिसागरोपमप्रमाणं कालचक्रमिति एषोऽपि गणितानुयोगः । तथा 'पासो' पाशः प्रासो वा पाश इव पाशः–बन्धनाद्यनर्थहेतुत्वात् प्रासः–कुन्तः, स इव वा प्रजानां मारणाद्यनर्थहेतुत्वात् । कोऽसौ पाशः प्रासो वा इत्याह–'भा' इति भानि–ग्रहा भौमादयः । कथम्भूताः सन्तः ? 'मल्ली' 'मं मसः' वा चन्द्रः, अल्लियन्ति–प्रविशन्ति मल्ली चन्द्रमण्डलभेदिन इत्यर्थः । न केवलं तथाभूता एव अनर्थप्रदाः, किन्तु 'पियगा' इत्यपि पिकः–कोकिलस्तद्वदङ्ग–मूर्त्तिर्येषां ते पिकाङ्गाः–कृष्णाः प्रतिभासमाना इत्यर्थः । तेऽपि हि ज्योतिःशास्त्रे प्रजानां राज्ञां च पाशवत् प्रासवच्चानर्थकरा एव स्युः । इति गणितानुयोगपक्षः ॥

अथ चरणकरणानुयोगः—

प्रकृष्टा उमा–कीर्त्तिर्येषां ते प्रोमाः, स्वचरितैः यशस्विन इत्यर्थः । भयोऽस्त्येषामिति अभ्रादित्वाद् अप्रत्यये भयाः–प्राणिनः एकेन्द्रियादिपञ्चेन्द्रियान्ताः, तेषां असवः–प्राणास्तेषां पानं–रक्षणं तत्र ऊर्जः–बलं येषां ते तथा । अरक्ताः–नीरागाः, साहचर्यात् निर्द्वेषाश्च ततो विशेषणकर्मधारयः । शशी–कर्पूरः, पुष्पं–श्वेतपुष्पम् । पुष्पशब्दो हि निर्विशेषणः । श्वेतकुसुममेव वक्ति, तथा च कालिदासः—

"पुष्पं प्रवालोपहितं यदि स्यान्–मुक्ताफलं वा स्फुटविद्रुमस्थम्[1] ।"

इति (कुमारसम्भवे स. १, श्लो. ४४) काव्यम् ।

तद्वद्दन्ता येषां ते तथा । एतेन तेषां देशनाकुशलत्वं ध्वन्यते । तदैव हि दशनद्युतिप्राकट्यसम्भवः । अत एवाह–'ससिगोरा' शशिवत् निर्मलतया गवां–वाणीनां रा–दीप्तिर्येषां ते शशिगोराः । एतेन भाषासमितत्वमुक्तम् । तच्च शेषसमितीनामुपलक्षणम् । ततो विशेषणकर्मधारयः । (सुष्ठु–शोभनानि) व्रतानि–अहिंसादीनि तेषां नेमिरिव नेमिः–चक्रधारा, प्रकर्षकोटिरिति यावत् । शोभनव्रतनेमिर्येषां ते तथा । तथा इः–कामस्तत्र विषये काल इव कालाः–यमतुल्याः इकालाः । चतुर्थपादः पूर्ववत् । एवंविधा भावसाधवो भवन्ति । इति चरणकरणानुयोगः ॥ २ ॥

अथ धर्मकथानुयोगः—

'रत्तासिपुप्फदंतससिगोरा' इति द्वितीयः पादः पूर्ववत् । कथं शशी–राजा आ रटतीत्याह–'पउमाभवासुपुज्जा' 'पउमा' पद्मा–लक्ष्मीस्तस्या भवाः–उत्पत्तयः अर्थात् अर्थागमाः । मम 'सुपुज्जा' सुतरां पूज्या आसन्, तेष्वेवादरात्, न पुनर्देवगुर्वादिषु । पुनः कथं रटति ? 'सुवयनेमीकाला' इत्यादि, शोभनव्रतानां–अहिंसादीनां नेमिः–उपचारात् परमकोटिस्तां कालयति–क्षिपति सुव्रतनेमीकाला 'अगाभा'–शरीरराढा, मम प्रिया–वल्लभा आसीत्, न

[1] एतदुत्तरार्धं यथा—"ततोऽनुकुर्याद् विशदस्य तस्यास्ताम्रौष्ठपर्यस्तरुचः स्मितस्य ॥"

पुनस्तपोनियमादिक्रिया । "आभा राढा विभूषा श्रीः" इति हैमनाममाला ( का० ६, श्लो० १४८ ) । इयं च देहलालना । 'मलीपासो' मयि लीयते–मम्बध्यते मली पाश इव पाशः–कर्मबन्ध' । तथा चापम्—

'"विभूसावत्तिय भिक्खू कम्म बधइ" (दशवैकालिके अ ६, श्लो ६६) इत्यादि । इति धर्मकथानुयोग. ॥ ३ ॥"

अथ द्रव्यानुयोग'—

'सुधयनेमीकाला' इति पूर्ववत् उत्पादव्ययध्रौव्यात्मक सत् तथैव प्रतीयमानत्वात् इत्यस्य पादस्यार्थः । एतच्चाय प्रत्यमिधीयते तं प्रतिपादयति–हे 'पउमाभवासुपुज्जा' 'प' इति परमेष्ठी–ब्रह्मा, उमाया 'भ' इति भर्त्ता उमया वा भाति उमाभ –रुद्र , 'वासु' इति वासुदेवः, ते पूज्या यस्य स तथा, तस्य सम्बोधन 'हे पउमाभवासुपुज्जा !' गोयमा ! इति तदामन्त्रणे सौ अदन्तस्य आर्षे आत्वम्, स च नैयायिको वैशेषिको वा, हरि-हर ब्रह्मणामेकमूर्त्तित्वात् । तथा हे 'रत्ता !' रक्त रक्तपटो–बौद्ध , तथा चागमे–"तवन्निय' त्ति ( ) तन्नामतृतीयवर्णो लोहितस्तद्वरणपटयोगात् प्राकृते तवन्निओ तस्यामन्त्रण हे रत्ता' । तथा 'स' इति साङ्ख्य , तथाऽकारप्रश्लेपात् असि –खड्ग पुप्पदन्तौ–सूर्यचन्द्रौ पौष्पदन्ता – तद्वशजत्वात् राजन्या , तेषा हि मूलतो द्वावेव वशौ सूर्यश्चन्द्रश्च, ततोऽसिप्रधानाः पौष्पदन्ता असिपौष्पदन्ता –युद्धप्रवृत्ता क्षत्रियाः, 'शशू हिंसायाम्' 'इकिस्तिव् स्वरूपार्थे' (सिद्ध० ५–३–१३७) इति शशि –हिसा यज्ञादौ पशुपक्षिवृक्षौषध्यादिशशिना गा–स्वर्ग राति–यजमानेभ्यो ददाति तथोपदेशदानात् ससिगोरा–मीमासका । अथवा शशि'–हिसा तद्विषया गा–वाच उपदेश वा राति शशिगोर –आलम्भ्याध्यायार्थव्याख्याता असिपौष्पदन्त इव हिसापरायणत्वात् य शशिगोरस्तस्यामन्त्रणम् । ततश्च भो परवादिन् ! 'पास' पश्य –अन्तस्तत्त्वेन त्रयात्मक वस्तु विलोकय । कथम्भूत सन् पश्य ? 'ओमली' 'ओम्' इत्यभ्युपगमे, त अलियइ–आश्रयति 'ओमली', स्याद्वादमभ्युपगम्य इत्यर्थ । भो भो एकान्तवादिनो भवता 'पियगाभा' वर्तते प्रिया प्रेयसी तस्या अङ्गानि स्तन वदन नयन-जघनादीनि तेषा आभा सादृश्यम्–दृष्टान्त इत्यर्थ । यथाहि–रागिण प्रेयसीना नाम तथा रूपाण्यङ्गानि कनककलश–पूर्णेन्दु–नलिनदल चक्रादिरूपतया स्वानुरागमात्रात् मन्यन्ते तथा भवन्तोऽप्यनन्तधर्मात्मकतया सदसन्नित्यानित्याभिलाप्यानभिलाप्यसामान्यविशेषरूपमपि कृत्स्न वस्तु तदेकान्तरूपतया मन्वाना स्वपक्षपातित्वमात्रमेवाभिव्यञ्जन्ति, न पुनर्यौक्तिकतामिति भाव ॥

द्वितीयप्रकारेणाऽपि लेशतो द्रव्यानुयोग प्रदर्श्यते यथा–'प' इति पारद , 'उ' इति उगयवीयाणि, 'मा' इति माक्षिकम् , 'भ' इति भर्म–हेम, 'व' इति बहुफली, 'आ' इत्या

१ विभूषाप्रत्ययिक भिक्षु कर्म बध्नाति ।

काशवल्ली, सन्धौ । 'सु' इति सुनाली, 'पुज्जा' इति 'प' इति प्रज्ञा तस्या ऊर्ज–बल यस्या· सकाशात् सा पुज्जा, म मूकब्राह्मी । 'रत्ता' इति रक्तदुग्धिका, 'ससि' त्ति शशिरेखा–बाकुची, 'पुप्फदत' त्ति केतकीनिर्यास , 'स' इति सर्प –अहिस्तेन च अहिखरावीजानि लक्ष्यन्ते, 'सि' इति सिगियविस, 'गोरा' इति अम्वचगेरी 'सु' सुरदाली–देवदाली, 'वयनेमी'ति व्रतस्य नेमिरिव नेमि –लज्जालुका लक्ष्यते, 'का' इति कटकारिका–लघुरिंगिणी, 'ला' इति लागली, 'पा' इति पन्नगनामोपलक्षिता नाड–नाइणी इति द्रव्यम् , 'सोमली' इति सोमवल्ली, 'पियगाभा' इति पिकाङ्गाभ–कोकिलादेहवर्ण, 'अ' इति अभ्रकम् इत्यर्थ । एतेषा वस्तूना गुरूपदेशयुक्त्या मीलने पीतसिद्धिर्भवति । इति द्विधाऽपि द्रव्यानुयोग ।

अथवा अग्रेतनगाथया सह वीजाक्षरमप्यत्रास्ति—

"[1]वरकणगतवियगोरा सोलस तित्थकरा मुणेयवा ।
एसो वण्णविभागो चउवीसाए जिणवराणा ॥" (आ० नि० गा० ३७१)

अत्र वर्णोऽक्षर–लोकेश्वराख्य, तस्य विभागो नादविन्दुकलाशिरइन्द्रेषु यथासङ्ख्य श्वेतकृष्णारुणनीलस्वर्णवर्णजिनन्यासः । अस्य नाभौ ध्यानादनाख्येय सर्वातिशायि फलमिति । अयमपि द्रव्यानुयोग ।

अस्माभि प्रतिपाद प्राग्व्याख्यातोऽनुयोग एकैक· ।
सकलाया गाथाया चतुरनुयोगी तु पृथगधुना ॥ १ ॥
अस्माभिर्लिखित दृष्ट्वा प्राचीनपत्रपङ्क्तिषु ।
तन्मे कृपा विधाय शोधनीय च विद्वद्भि ॥ २ ॥

ग्रंथाग्र० १४० ।



---

1 छाया—

वरकनकतपितगौरा षोडश तीर्थङ्करा ज्ञातव्या ।
एष वर्णविभागश्चतुर्विंशत्या जिनवराणाम् ॥

पुनस्तपोनियमादिक्रिया । "आभा राढा विभूषा श्री" इति हैमनाममाला (का० ६, श्लो० १४८)। इय च देहलालना। 'गलीपासो' मयि लीयते-सम्भाव्यते मली पाश इव पाश -कर्मबन्ध'। तथा चार्षम्—

"[1]विभूसावत्तिय भिक्खू कम्म बधइ" (दशवैकालिके अ ६, श्लो. ६६) इत्यादि। इति धर्मकथानुयोग ॥ ३ ॥"

अथ द्रव्यानुयोग —

'सुधयनेमीकाला' इति पूर्ववत् उत्पादव्ययध्रौव्यात्मक सत् तथैव प्रतीयमानत्वात् इत्यस्य पादस्यार्थः। एतच्चाय प्रत्यभिधीयते त प्रतिपादयति-हे 'पउमाभवासुपुज्जा' 'प' इति परमेष्ठी-ब्रह्मा, उमाया 'भ' इति भर्त्ता उमया वा भाति उमाभ -रुद्र, 'वासु' इति वासुदेव', ते पूज्या यस्य स तथा, तस्य सम्बोधन 'हे पउमाभवासुपुज्जा!' गोयमा! इति तदामन्त्रणे सौ अदन्तस्य आर्षे आत्वम्, स च नैयायिको वैशेषिको वा, हरि-हर ब्रह्मणामेकमूर्त्तित्वात्। तथा हे 'रत्ता!' रक्त रक्तपटो-बौद्ध, तथा चागमे-"तच्चन्निय' त्ति ( ) तन्नामतृतीयवर्णो लोहितस्तद्वरणपटयोगात् प्राकृते तच्चन्निओ तस्यामन्त्रण हे रत्ता!। तथा 'स' इति साङ्ख्य, तथाऽकारप्रश्लेषात् असि -खड्ग पुष्पदन्तौ-सूर्यचन्द्रौ पौष्पदन्ता'- तद्वशजत्वात् राजन्या, तेषा हि मूलतो द्वावेव वशौ सूर्यश्चन्द्रश्च, ततोऽसिप्रधानाः पौष्पदन्ता असिपौष्पदन्ता -युद्धप्रवृत्ता क्षत्रियाः, 'शशू हिंसायाम्' 'इकिस्तिव् स्वरूपार्थे' (सिद्ध० ५-३-१३७) इति शशि -हिंसा यज्ञादौ पशुपक्षिवृक्षौषध्यादिशशिना गा-स्वर्ग राति-यजमानेभ्यो ददाति तथोपदेशदानात् ससिगोरा-मीमासका। अथवा शशि'-हिसा तद्विषया गा-वाच उपदेश वा राति शशिगोर -आलम्भ्याध्यायर्थव्याख्याता असिपौष्पदन्त इव हिसापरायणत्वात् य शशिगोरस्तस्यामन्त्रणम्। ततश्च भो परवादिन्! 'पास' पश्य -अन्तस्तत्वेन त्रयात्मक वस्तु विलोकय। कथम्भूत सन् पश्य? 'ओमली' 'ओम्' इत्यभ्युपगमे, त अलियइ-आश्रयति 'ओमली', स्याद्वादमभ्युपगम्य इत्यर्थ। भो भो एकान्तवादिनो भवता 'पियगाभा' वर्तते प्रिया प्रेयसी तस्या अङ्गानि स्तन वदन नयन-जघनादीनि तेषा आभा सादृश्यम्-दृष्टान्त इत्यर्थ। यथाहि-रागिण प्रेयसीना नाम तथा रूपाण्यङ्गानि कनककलश-पूर्णेन्दु-नलिनदल चक्रादिरूपतया स्वानुरागमात्रात् मन्यन्ते तथा भवन्तोऽप्यनन्तधर्मात्मकतया सदसन्नित्यानित्याभिलाप्यानभिलाप्यसामान्यविशेषरूपमपि कृत्स्न वस्तु तदेकान्तरूपतया मन्वाना स्वपक्षपातित्वमात्रमेवाभिव्यञ्जन्ति, न पुनर्यौक्तिकतामिति भाव ॥

द्वितीयप्रकारेणाऽपि लेशतो द्रव्यानुयोग प्रदर्श्यते यथा-'प' इति पारद, 'उ' इति उगयबीयाणि, 'मा' इति माक्षिकम्, 'भ' इति भर्म-हेम, 'व' इति बहुफली, 'आ' इत्या

१ विभूषाप्रत्ययिक भिक्षु कर्म बध्नाति।

काशवल्ली, सन्धौ । 'सु' इति सुनाली, 'पुज्जा' इति 'प' इति प्रज्ञा तस्या ऊर्ज-बलं यस्याः सकाशात् सा पुज्जा, म मूकब्राह्मी । 'रत्ता' इति रक्तदुग्धिका, 'ससि' त्ति शशिरेखा-वाकुची, 'पुप्फदत' त्ति केतकीनिर्यास , 'स' इति सर्प -अहिस्तेन च अहिखरावीजानि लक्ष्यन्ते, 'सि' इति सिगियविस, 'गोरा' इति अम्बचगेरी 'सु' सुरदाली-देवदाली, 'वयनेमी'ति व्रतस्य नेमिरिव नेमि·-लज्जालुका लक्ष्यते, 'का' इति कटकारिका-लघुरिंगिणी, 'ला' इति लागली, 'पा' इति पन्नगनामोपलक्षिता नाइ-नाइणी इति द्वयम् , 'सोमली' इति सोमवल्ली, 'पियंगाभा' इति पिकाङ्गाभ-कोकिलादेहवर्ण, 'अ' इति अभ्रकम् इत्यर्थ· । एतेषा वस्तूना गुरूपदेशयुक्त्या मीलने पीतसिद्धिर्भवति । इति द्विधाऽपि द्रव्यानुयोग· ।

अथवा अग्रेतनगाथया सह वीजाक्षरमप्यत्रास्ति—

"[1]वरकणगतवियगोरा सोलस तित्थकरा मुणेयव्वा ।
एसो वण्णविभागो चउवीसाए जिणवराणा ॥" (आ० नि० गा० ३७१)

अत्र वर्णोऽक्षर-लोकेश्वराख्य, तस्य विभागो नादविन्दुकलाशिरइन्द्रेषु यथासङ्ख्यं श्वेतकृष्णारुणनीलस्वर्णवर्णजिनन्यासः । अस्य नाभौ ध्यानादनाख्येय सर्वातिशायि फलमिति । अयमपि द्रव्यानुयोग ।

अस्माभि· प्रतिपादं प्राग्व्याख्यातोऽनुयोग एकैक· ।
सकलाया गाथाया चतुरनुयोगी तु पृथगधुना ॥ १ ॥
अस्माभिर्लिखित दृष्ट्वा प्राचीनपत्रपङ्क्तिषु ।
तन्मे कृपा विधाय शोधनीय च विद्वद्भि ॥ २ ॥

ग्रंथाग्रं० १४० ।



१ छाया—

वरकनकतपितगौरा षोडश तीर्थङ्करा ज्ञातव्या ।
एष वर्णविभागश्चतुर्विंशत्या जिनवराणाम् ॥

# गोशब्दकाव्यम्

गोश्राव किमयं गवाश्रयगता किं सुभ्रु ! गां वीक्षसे ?
गोमध्ये ! चरणेन गां लिखसि किं गोस्त्रीनिभे ! देहि गाम् ।
गावो यान्ति गृहेषु वासरमणेर्गावश्च दूरं गता
गावस्त्वद्विरहे ममासुहरणे एरेहि यावो गृहम् ॥



१ नेत्रजल २ गोकुल० ३ दिश ४ पशु० ५ भुव ६ अप्सर सदृशे ! ७ वाच ८ सुरभय ९ किरणा १० बाणा । "गौरुदके दृशि स्वर्गे दिशि पशौ रश्मौ, वज्रे भूमाविषौ गिरि" इति हैमेऽनेकार्थसङ्ग्रहे (श्लो० ६) ।

वृत्ति —काचिदङ्गना वनान्तरे गवाश्रये–गोकुले गता सती गोश्राव–नेत्रजल मुमोच । तस्मिन् अवसरे केनचिद् गोपेन सा पृष्टा–हे सुभ्रु !–शोभने भ्रुवो यस्या सा सम्बोधने हे सुभ्रु ! अय गोश्राव किम् ? । पुन गां–पृथ्वीं किं वीक्षसे ? तथा हे गोमध्ये ! गो–वज्र तन्मध्यमिव मध्य यस्या सा तत्सम्बोधन हे गोमध्ये !–कृशोदरि ! चरणेन गां–पृथ्वीं किं लिखसि ? । अधुना हे गोस्त्रीनिभे !–स्वर्गीयस्त्रीसदृशे ! गां–वाणीं देहि, वाच दत्स्व । वासरमणे –सूर्यस्य गाव –किरणा दूर गता, तस्मात् सम गावो गृह यान्ति । पुन ए –कामस्य गाव –बाणा, मम असुहरणा –प्राणहरणा जाता । क सति ? त्वद्विरहे जाते सति सम्प्रति त्व आगच्छ, आवां याव –गृह गच्छाव ।

श्रेष्ठिदेवचन्द्र–लालभाइ–जैनपुस्तकोद्धार–ग्रन्थाङ्के—



# ॥ सप्त[1] स्मरणानि ॥

## ( विविधविबुधवरविरचितवृत्तिविभूषितानि )

## प्रथमं 'पञ्चपरमेष्ठिनमस्कार'स्मरणम् ।

( व्याख्यायमलसमलङ्कृतम् )

### श्रीसिद्धिचन्द्रगणिकृता व्याख्या

श्रीगणेशाय नम ।

श्रीनाभेयः श्रिय दद्यात्, सुरासुरनमस्कृतः ।
विघ्नानेकपपञ्चास्यो, दधद् विश्वजनीनताम् ॥ १ ॥–( अनुष्टुप् )
अकब्बरसुरत्राण–हृदयाम्बुजषट्पद' ।
भानुचन्द्रश्चिर जीयाद्, गुरुर्मे वाचकाग्रणीः ॥ २ ॥–( अनु० )
अष्टोत्तरशताना यो—ऽवधानाना विधायकः ।
दधानः पुस्फहमेति[2], विरुद शाहिनाऽर्पितम् ॥ ३ ॥–( अनु० )
तेन वाचकचन्द्रेण, सिद्धिचन्द्रेण सर्वदा ।
बुद्धिवृद्ध्यै वितन्द्रेण, बालानामल्पमेधसाम् ॥ ४ ॥–( अनु० )
शश्वत् सप्तस्मरणाना, वृत्तिरेषा विधीयते ।
तत्र तावन्नमस्कार, एव व्याख्यायते मया ॥ ५ ॥–( अनु० )

–त्रिभिर्विशेषकम्

---

१ नव इति प्रसिद्धिरधुना । २ 'खुरफहमिति' इति प्रतिभाति ।

# गोशब्दकाव्यम्

गोश्राव किमयं गवाश्रयगता किं सुभ्रु ! गां वीक्षसे ?
गोमध्ये ! चरणेन गां लिखसि किं गोस्त्रीनिभे ! देहि गाम् ।
गावो यान्ति गृहेषु वासरमणेर्गावश्च दूरं गता
गावस्त्वद्विरहे ममासुहरणे एरेहि यावो गृहम् ॥



१ नेत्रजल २ गोकुल० ३ दिश ४ पशु० ५ भुव ६ अप्सर सदृशे ! ७ वाच ८ सुरभय ९ किरणा १० बाणा । "गौरुदके दृशि स्वर्गे दिशि पशौ रश्मौ, वज्रे भूमाविषौ गिरि" इति हैमेऽनेकार्थसङ्ग्रहे ( श्लो० ६ ) ।

वृत्ति —काचिदङ्गना वनान्तरे गवाश्रये-गोकुले गता सती गोश्राव-नेत्रजलं मुमोच । तस्मिन् अवसरे केनचिद् गोपेन सा पृष्टा-हे सुभ्रु !-शोभने भ्रुवौ यस्या सा सम्बोधने हे सुभ्रु ! अय गोश्राव किम् ? । पुन गां-पृथ्वीं किं वीक्षसे ? तथा हे गोमध्ये ! गो-वज्र तन्मध्यमिव मध्य यस्या सा तत्सम्बोधन हे गोमध्ये !-कृशोदरि ! चरणेन गां-पृथ्वीं किं लिखसि ? । अधुना हे गोस्त्रीनिभे !-स्वर्गीयस्त्रीसदृशे ! गां-वाणीं देहि, वाच दत्स्व । वासरमणे -सूर्यस्य गाव -किरणा दूर गता , तस्मात् सम गावो गृह यान्ति । पुन ए -कामस्य गाव -बाणा , मम असुहरणा - प्राणहरणा जाता । क्व सति ? त्वद्विरहे जाते सति सम्प्रति त्व आगच्छ, आवां याव -गृह गच्छाव ।

## नमो सिद्धाणं ॥ २ ॥

### [ नमः सिद्धेभ्यः ]

सि० व्या०—नमो–नमस्कारः । केभ्यः ? 'सिद्धेभ्यः' सितं–प्रभूतकालेन बद्धं अष्टप्रकारं कर्म शुक्लध्यानाग्निना ध्मातं—भस्मीकृतं यैस्ते निरुक्तिवशात् सिद्धास्तेभ्यः इति 'बहुव्रीहिः' । यदुक्तं ( आव० नम० ४३८तमे पत्राङ्के )—

"[1]दीहकालरयं जं तु, कम्मं से सिअमट्ठहा ( जंतुकम्मं सेसि० ) ।
सिअं धंतं ति सिद्धस्स, सिद्धत्तमुवजायइ ॥ १ ॥"–( अनु० )

ह० व्या०—( नमो० इति । ) तथा नमः सिद्धेभ्यः । 'षिञ् बन्धने' ( पाणिनीय-धातुपाठे १४७८ ) सितं–बद्धं प्रस्तावादष्टविधं कर्म तद् ध्मातमिति ध्मातं–शुक्लध्यानाग्निना दग्धं–भस्मीकृतं यैस्ते निरुक्तिवशात् सिद्धाः । यद्वा सिद्धिगतिनामधेयं स्थानं प्राप्ताः सिद्धाः । यद्वा सिद्धाः–सुनिष्ठितार्था मोक्षप्राप्त्या अपुनर्भवत्वेन सम्पूर्णार्थास्तेभ्यः [2]सिद्धेभ्यो नमः ॥ २ ॥

## नमो आयरियाणं ॥ ३ ॥

### [ नम आचार्येभ्यः ]

सि० व्या०—नमो–नमस्कारः । केभ्यः ? 'आचार्येभ्यः' स्वयं पञ्चविधाचारवन्तोऽन्येपामपि तत्प्रकाशकत्वात् आचारे साधवः आचार्यास्तेभ्यः इति 'तत्पुरुषः' । यथा ( आव० नम० ४४८ तमे पत्राङ्के विशेषावश्यकेऽपि गा० ३१९० )—

"[3]पंचविहमायारं, आयरमाणा तहा [4]पभासंता ।
आयारं दसंता, आयरिआ तेण वुच्चंति ॥ १ ॥"–( आर्या )

"अनुयोगकृदाचार्यः" इति हैमः ( अभिधानचिन्तामणौ का० १, श्लो० ७८ ) ॥ ३ ॥

---

प्रच्छन्नत्वस्याभावेन येषां ते अरहोऽन्तरं अतस्तेभ्योऽरहोऽन्तेभ्य, अथवा अविद्यमानो रथ –स्यन्दन सकलपरिग्रहोपलक्षणभूतोऽन्तश्च–विनाशो जराद्युपलक्षणभूतो येषा ते अरथान्ता अतस्तेभ्य, अथवा 'अरहन्ताणति क्वचिदप्यासक्तिमगच्छद्भ्य क्षीणरागत्वात्, अथवा अरहयद्भ्य –प्रकृष्टरागादिहेतुभूतमनोज्ञेतरविषयसम्पर्केऽपि वीतरागत्वादिकं स्व स्वभावमत्यजद्भ्य इत्यर्थ ।"

१ छाया—
दीर्घकालरज (य) यत् तु कर्म तत् शेषितमष्टधा ( अथवा दीर्घ०रज जन्तुकर्म तस्यासितमष्टधा ) ।
सितं ध्मातमिति सिद्धस्य सिद्धत्वमुपजायते ॥

२ उक्त च—
"ध्मातं सितं येन पुराणकर्म यो वा गतो निर्वृतिसौधमूर्ध्नि ।
ख्यातोऽनुशास्ता परिनिष्ठितार्थो य सोऽस्तु सिद्ध कृतमङ्गलो मे ॥ १ ॥"

३ छाया—
पञ्चविधमाचारमाचरन्तस्तथा प्रभाषमाणा ।
आचारं दर्शयन्त आचार्यास्तेनोच्यन्ते ॥

४ 'पयासता' इति पाठ भग० विवरणे ।

श्रीसर्वज्ञाय नमः ।

# नमो अरिहंताण ॥ १ ॥

## [ नमोऽर्हद्भ्यः ]

नमो अरिहंताणमिति । नमो–नमस्कारः । केभ्यः ? 'अर्हद्भ्यः' शक्रादिकृतां पूजां सिद्धिगतिं चार्हन्तस्तेभ्यः । उक्तं च ( आवश्यकनिर्युक्तौ नमस्कारनिर्युक्तौ ४०६तमे पत्राङ्के )—

"अरिहंति वंदणनम–सणाइ अरिहंति पूया[ इ ]सक्कारं ।
सिद्धिगमणं च अरिहा, अरिहंता तेण वुच्चंति ॥ १ ॥"–( आर्या )

## श्रीहर्षकीर्तिसूरिकृता व्याख्या

श्रीगुरुभ्यो नमः । ऐं नमः ।

प्रणिपत्य जिनं वक्ष्ये, सप्तस्मरणेषु विवरणं किञ्चित् ।
यस्मान्मन्दमतीना–मपि भवति सुखेन तद्बोधः ॥ १ ॥–( आर्या )

यतः पर्वदिनेषु सकलश्रेयोऽर्थं क्षुद्रोपद्रवादिदोषनिवारणार्थं च कारणादौ सुखशान्त्यर्थं च सप्त मिलिता(नि) एव स्मर्यन्ते–गुण्यन्त इति सप्त स्मरणान्युच्यन्ते । तेष्वादौ चतुर्दशपूर्वाणामादिभूतं अनाद्यनन्तं च पञ्चपरमेष्ठिनमस्काररूपं प्रथमस्मरणमादौ व्याख्यायते–'नमो अरिहंताणं' इत्यादि । अत्र पाठत्रयम्–अरहंताणं, अरिहंताणं, अरुहंताणं । तत्र अर्हन्ति सुरेन्द्रादिकृतां पूजां इत्यर्हन्तः तेभ्योऽर्हद्भ्यः, अरीन्–रागद्वेषादीन् घ्नन्तीति अरिहन्तारः तेभ्योऽरिहन्तृभ्यः, न रोहन्ति–नोत्पद्यन्ते दग्धकर्मबीजत्वात्–पुनः संसारे न जायन्ते इत्यरुहन्तः तेभ्योऽरुहद्भ्यो नमो–नमस्कारोऽस्तु । प्राकृतत्वात् चतुर्थ्यर्थे षष्ठी ॥ १ ॥

---

१ अस्याष्टोत्तरशतमिता अथा कृता श्रीविनयसमुद्रगणिशिष्यपण्डितश्रीगुणरत्नमुनीश्वरै ।

२ 'अरहंताण,' 'अरुहंताण' इत्यपि पाठौ ।

३ छाया—

अर्हन्ति वन्दननमस्यने अर्हन्ति पूजासत्कारम् ।
सिद्धिगमनस्य चार्हा अर्हन्तस्तेनोच्यन्ते ॥

४ भगवतीसूत्रस्य श्रीअभयदेवसूरिसूत्रिते विवरणे ( तृतीये पत्राङ्के ) तु पाठोऽयम्—"सणाणि अरिहंति पूयसक्कारं । सिद्धिगमणं च अरहा अरहंता तेण वुच्चन्ति ॥"

५ ख प्रत्यामस्या मूलस्मरणप्रारम्भे 'श्रीअमृतविजयगणिगुरुभ्यो नमः' इत्युल्लेख ॥

६ 'अरहंताण अरिहंताण' इति ख–पाठ ।

७ संतुल्यता यदुक्तं आव० नम० ( ४०५ तमे पत्राङ्के )—

"अट्ठविहं पि य कम्मं अरिभूयं होइ सव्वजीवाणं ।
तं कम्ममरिं हंता, अरिहंता तेण वुच्चंति ॥ १ ॥"
[ अष्टविधमपि च कर्म अरिभूतं भवति सर्वजीवानाम् ।
तेषां कर्मारीणां हन्तारः अरिहन्तारस्तेनोच्यन्ते ॥ ]

८ संयोजनीयोऽत्र विशेषो यो वरीवर्ति भगवतीसूत्रस्य श्रीअभयदेवसूरिकृतविवरणे—

न्द्रादयः पार्श्वे-समीपे सततसन्निहितत्वात् यस्य तम् । अथवा उपसर्गहरमिति पृथक् । पश्यति कालत्रयवर्ति वस्तुजातमिति पश्यस्तम् । प्राकृतव्युत्पत्त्या 'पासं' इति । यद्वा प्रगता आशा यस्य स प्राशस्त, निराकाङ्क्षमित्यर्थः । पार्श्वं-श्रीपार्श्वनाथ 'वंदामि' त्ति वन्दे-नमस्करोमि । तथा कर्माणि ज्ञानावरणीयाद्यष्ट तानि जीवचन्द्रमसो ज्ञानांशुमण्डलच्छादकत्वाद् घना इव-जलदा इव कर्मघनाः,

"स्थितः शीतांशुवज्जीवः, प्रकृत्या भावशुद्धया ।
चन्द्रिकावच्च विज्ञान, तदावरणमभ्रवत् ॥ १ ॥"

इति वचनात्, तेभ्यो मुक्तः-पृथग्भूत· कर्मघनमुक्तस्तम् । अत्र चन्द्ररूपकाभावेऽपि विशेषणान्यथानुपपत्त्या तदवगमः । अथवा आर्षत्वात् घनशब्दस्य विशेषणत्वेऽपि परनिपातात् घनानि-दीर्घकालस्थितिकानि बहुप्रदेशाग्राणि वा यानि कर्माणि घातिकर्माणि तैर्मुक्त-त्यक्तम्, उत्पन्नकेवलज्ञानमित्यर्थः । तथा विषधरा-अनन्त-वासुकि-तक्षक कर्कोट-पद्म महापद्म-शङ्खपाल-कुलिक जय-विजयलक्षणदशनागकुलजाता नागास्तेषां विष पार्थिवादिभेदभिन्न निर्नाशयति-निश्चितमपहरति (इति) विषधरविषनिर्नाशस्तम् । भगवन्नामपूतमन्त्रजापाद् हि सर्वविषधरविषनाशः सुप्रतीत एव मान्त्रिकाणाम् । यद्वा विष-पानीय प्रस्तावात् 'मणिकर्णिका'जल तत्र 'घर' त्ति गृह-निवासो यस्यासौ विषगृहः । प्रायेण 'वाराणसी'वासिनः पञ्चाग्नितपश्चरण 'मणिकर्णिका'तीर एव कुर्वाणा दृश्यन्ते । स च सामर्थ्यात् कमठमुनिस्तस्य तप-धर्म लौकिकैर्धर्मतया गृह्यमाणत्वात् पञ्चाग्नितपश्चर्यालक्षण निर्नाशयति य', प्रज्वलज्ज्वलनदह्यमानकाष्ठकोटरान्तम्रियमाणसर्पप्रदर्शनेन मातुर्लोकाना च मनसि तत्तपसोऽधर्मरूपत्वनिश्चायनात् तम् । अनेन गृहस्थावस्थावदातस्सूचित परमकारुणिकत्व च कुमार्गनिर्लोठनात् । अथवा विष-मिथ्यात्वकषायादिलक्षण भावविष धारयन्तीति विषधरा विषगृहा वा मिथ्यात्वकषायादिदोषदूषितात्मान' प्राणिन' तेषां विष यथोक्तरूपमेव निर्नाशयति-निजवचनामृतरसोपयोजनेनापगमयतीति विषधरविषनिर्नाशो विषगृहविषनिर्नाशो वा तम्, तथा मङ्गलानि च विपदुपशमरूपाणि, कल्याणानि च सम्पदुत्कर्षरूपाणि तेषां उभयेषामप्यावास इवावासः-क्रीडास्थान तम् । अत एव हि भगवन्त मङ्गलकल्याणावास पर्युपासीना अपि तदुभयभाजन भवेयुः ।

---

[ सिद्धा ' भो प्रयतो नमो जिनमताय नन्दि सदा सयमे
देवनागसुवर्णकिन्नरगणसद्भूतभावार्चिताय ।
लोको यत्र प्रतिष्ठितो जगदिद त्रैलोक्यमर्त्यासुर
धर्मो वर्धता शाश्वतो विजयता धर्मोत्तर वर्धताम् ॥ ]

१ 'वन्दामि इति' इति क पाठ । २ 'आपरत्वेन' इति ख पाठ । ३ 'भूत' इति ग-पाठ । ४ श्रीमणिकर्णिकाष्टक मुद्रित बृहत्स्तोत्रमुक्ताहारे ( पृ० २१९ ) । ५ 'तपश्चर्यादि-' इति ख-पाठ । ६ 'सर्पोपदर्श०' इति ख पाठ, 'सर्पेऽपि दृश०' इति ग पाठ ।

अत्र च यद्यप्यर्हतामेव मुख्यत्व युक्त, तथाप्येतत् स्तोत्र श्रुतकेवलिरचितत्वात् सूत्रम् । तच्चोपाध्यायैरेवाध्यापनीयमित्यादावुपाध्याया उक्ता । उपाध्यायपार्श्वे चाधीयमानस्य साधव एव साहायक कुर्वते, तेषा साहायककरण एवाधिकारात् "मग्गे अविप्पणासो आयारे विणयया सहायत्त" ( आव० नि० गा० ३१३, विशेषा० गा० २९४४ ) ति यथामङ्गलमर्हत्सिद्धाचार्योपाध्यायसाधूनामावश्यकेऽधिकार उक्त । एव चाधीतस्य तस्यार्थमाचार्या एव कथयन्तीति तदनन्तर तेषामुपन्यास । आचार्योपदेशेन चार्हन्तो ज्ञायन्ते । अर्हंश्चैतत्स्तोत्रवर्णनीयो भगवान् पार्श्व इत्याचार्यानन्तरमर्हन्तोऽभिहिता । एतत्स्तोत्रपाठाच्च भावत परम्परया सिद्धत्वमित्यर्हदनन्तर सकलसदनुष्ठानफलभूता सिद्धा प्रतिपादिता इति पञ्चपरमेष्ठिगर्भितत्वात् श्रुतकेवलिप्रणीतत्वाच्च नास्य स्तवराजस्य प्रभावमहिमा दुःश्रद्धान । साक्षात्क्रियन्ते चास्य विवेकिभिरनेके प्रभावातिशया इति । अस्य च पञ्चाशीत्यधिकशताक्षरमानस्येयमाद्यगाथा—

उवसग्गहरंपास[3], पास वंदामि कम्मघणमुक्क ।
विसहरविसनिन्नास, मगलकल्लाणआवासं ॥ १ ॥

[ उपसर्गहरपार्श्वं[4] पार्श्वं वन्दे कर्मघनमुक्तम्[5] ।
विषधरविषनिर्नाशं[6][7] मङ्गलकल्याणावासम्[8] ॥ ]

उपसर्गाः—दिव्य-मानुष तैरश्चा ऽऽत्मसवेदनीयभेदाच्चतुर्विधाः उपप्लवास्तान् हरति—अपनयतीत्युपसर्गहरः, शासनाधिष्ठायकत्वात् प्रत्यूहनिवारयिता । तथाभूत पार्श्व—पार्श्वयक्षो यस्य स तथा तम् । अनुस्वारस्त्वार्षत्वादलाक्षणिक, यथा—"[9]देवनागसुवण्ण" इति । उपसर्गहरा वा धरणे-

एषाऽसौ त्रिपुरा हृदि द्युतिरिवोष्णांशो सदाहस्थिता
छिन्द्याद् व सहसा पदैस्त्रिभिरघ ज्योतिर्मयी वाङ्मयी ॥ १ ॥"

१ 'सूचनात्' इति क पाठ , 'रचितात्' इति ग पाठ ।

२ एतदुत्तरार्धच्छाये यथा—

" पचविहनमोक्कार करेमि एएहिं हेऊहिं"
मार्गोऽविप्रणाश आचारो विनयता सहायत्वम् ।
पञ्चविधनमस्कार करोम्येतैर्हेतुभि ॥

३ 'पास' इति पृथक् पद वा । ४ 'उपसगहर पश्य ( अथवा प्राश पाश वा )' इत्यपि सम्भवति । ५ घन कर्ममुक्त इत्यपि सम्भवति । ६ 'विषगृहवृष०' 'विषगृहविष०' वा इत्यपि सम्भवति । ७ 'नश श' ( सिद्ध० २-३-७३ ) इति सूत्रेण 'निर्णाश' स्यात्, परन्तु व्याख्यात्रितये श्रीपूर्णचन्द्रीयवृत्तावपि प्रयोगोऽय दरीदृश्यते । ८ 'कल्याणआवासम्' इत्यपि सम्भवति ।

९ पुक्खरवरेत्यपरनाम्न श्रुतस्तवस्य चतुर्थपद्यस्य द्वितीयपादगतोऽय पाठ । सम्पूर्ण पद्य तु यथा—

"सिद्धे ! भो पयओ णमो जिणमए नंदी सया सजमे
देवनागसुवण्णकिन्नरगणस्सब्भूअभावच्चिए ।
लोगो जत्थ पइट्ठिओ जगमिण तेलुक्कमच्चासुरं
धम्मो वड्ढउ सासओ विजयओ धम्मुत्तर वड्ढउ ॥"—शार्दूलविक्रीडितम्

न्द्रादयः पार्श्वे-समीपे सततसन्निहितत्वात् यस्य तम् । अथवा उपसर्गहरमिति पृथक् । पश्यति कालत्रयवर्ति वस्तुजातमिति पश्यस्तम् । प्राकृतव्युत्पत्त्या 'पास' इति । यद्वा प्रगता आशा यस्य स प्राशस्त, निराकाङ्क्षमित्यर्थः । पार्श्व-श्रीपार्श्वनाथ 'वंन्दामि' त्ति वन्दे-नमस्करोमि । तथा कर्माणि ज्ञानावरणीयाद्यष्ट तानि जीवचन्द्रमसो ज्ञानांशुमण्डलच्छादकत्वाद् घना इव-जलदा इव कर्मघनाः,

> "स्थितः शीतांशुवज्जीवः, प्रकृत्या भावशुद्धया ।
> चन्द्रिकावच्च विज्ञान, तदावरणमभ्रवत् ॥ १ ॥"

इति वचनात्, तेभ्यो मुक्तः-पृथग्भूत' कर्मघनमुक्तस्तम् । अत्र चन्द्ररूपकाभावेऽपि विशेषणान्यथानुपपत्त्या तदवगमः । अथवा आर्षत्वात् घनशब्दस्य विशेषणत्वेऽपि परनिपातात् घनानि-दीर्घकालस्थितिकानि बहुप्रदेशाग्राणि वा यानि कर्माणि घातिकर्माणि तैर्मुक्त-त्यक्तम्, उत्पन्नकेवलज्ञानमित्यर्थ' । तथा विषधरा-अनन्त-वासुकि-तक्षक कर्कोट-पद्म महापद्म-शङ्खपाल-कुलिक जय-विजयलक्षणदशनागकुलजाता नागास्तेषा विष पार्थिवादिभेदभिन्न निर्नाशयति-निश्चितमपहरति (इति) विषधरविषनिर्नाशस्तम् । भगवन्नामपूतमन्त्रजापाद् हि सर्वविषधरविषनाशः सुप्रतीत एव मान्त्रिकाणाम् । यदिवा विष-पानीय प्रस्तावात् 'मणिकर्णिका'जल तत्र 'घर' ति गृह-निवासो यस्यासौ विषगृहः । प्रायेण 'वाराणसी'वासिन' पञ्चाग्नितपश्चरण 'मणिकर्णिका'तीर एव कुर्वाणा दृश्यन्ते । स च सामर्थ्यात् कमठमुनिस्तस्य वृष-धर्म लौकिकैर्धर्मतया गृह्यमाणत्वात् पञ्चाग्नितपश्चर्यालक्षण निर्नाशयति य', प्रज्वलज्ज्वलनदह्यमानकाष्ठकोटरान्तर्म्रियमाणसर्पप्रदर्शनेन मातुर्लोकाना च मनसि तत्तपसोऽधर्मरूपत्वनिश्चायनात् तम् । अनेन गृहस्थावस्थानदातद्युचित परमकारुणिकत्व च कुमार्गनिर्लोठनात् । अथवा विष-मिथ्यात्वकषायादिलक्षण भावविष धारयन्तीति विषधरा विषगृहा वा मिथ्यात्वकषायादिदोषदूषितात्मान. प्राणिनः तेषा विष यथोक्तरूपमेव निर्नाशयति-निजवचनामृतरसोपयोजनेनापगमयतीति विषधरविषनिर्नाशो विषगृहविषनिर्नाशो वा तम्, तथा मङ्गलानि च विपदुपशमरूपाणि, कल्याणानि च सम्पदुत्कर्षरूपाणि तेषा उभयेषामप्यावास इवावास.-क्रीडास्थान तम् । अत एव हि भगवन्त मङ्गलकल्याणावास पर्युपासीना अपि तदुभयभाजन भवेयु ।

---

> [ सिद्धा ' भो प्रयतो नमो जिनमताय नन्दि सदा सयमे
> देवनागसुवर्णकिन्नरगणसद्भूतभावार्चिताय ।
> लोको यत्र प्रतिष्ठितो जगदिद त्रैलोक्यमर्त्यासुर
> धर्मो वर्धता शाश्वतो विजयता धर्मोत्तर वर्धताम् ॥ ]

१ 'वन्दामि इति' इति क पाठ । २ 'आर्षत्वेन' इति ख पाठ । ३ 'भूत' इति ग-पाठ । ४ श्रीमणिकर्णिकाष्टक मुद्रित बृहत्स्तोत्रमुक्ताहारे ( पृ० ३१९ ) । ५ 'तपश्चर्यादि-' इति ख पाठ । ६ 'सर्पोपदर्श०' इति ख पाठ, 'सर्पेऽपि दर्श०' इति ग पाठ ।

अत्र च यद्यप्यर्हतामेव गुरुत्व युक्त, तथाप्येतत् स्तोत्र श्रुतकेवलिर्रचितत्वात् प्रथम् । तथो-पाध्यायैरेवाध्यापनीयमित्यादावुपाध्याया उक्ता । उपाध्यायपार्श्वे चाधीयमानस्य साधव एव साहायक कुर्वते, तेपा साहायककरण एवाधिकारात् "मंग्गे अविप्पणासो आयारे विणयया सहायत्त" ( आव० नि० गा० ३१३, विशेषा० गा० २९४४ ) ति यथाक्रमऽयमर्हत्सिद्धाचार्योपाध्यायसाधूनामावश्यकेऽधिकार उक्त' । एव चाधीतस्य तस्यार्थमाचार्या एव कथयन्तीति तदनन्तर तेपामुपन्यास' । आचार्योपदेशेन चार्हन्तो ज्ञायन्ते । अर्हश्चैतत्स्तोत्रवर्णनीयो भगवान पार्श्वं इत्याचार्यानन्तरमर्हन्तोऽभिहिता । एतत्स्तोत्रपाठाच भावत परम्परया सिद्धत्वमित्यर्हदनन्तर सकलसदनुष्ठानफलभूता सिद्धा' प्रतिपादिता इति पञ्चपरमेष्ठिगर्भितत्वात् श्रुतकेवलिप्रणीतत्वाच नास्य स्तवराजस्य प्रभावमहिमा दुःश्रद्धान । साक्षात्क्रियन्ते चास्य विवेकिभिरनेके प्रभावातिशया इति । अस्य च पञ्चाशीत्यधिकशताक्षरमानस्येयमाद्यगाथा—

उवसग्गहर[३]पास, पासं वदामि कम्मघणमुक्क ।
विसहरविसनिन्नास, मंगलकल्लाणआवासं ॥ १ ॥

[ [४]उपसर्गहरपार्श्वं पार्श्वं वन्दे [५]कर्मघनमुक्तम् ।
वि[६]पधरविपनि[७]र्नाश मङ्गल[८]कल्याणावासम् ॥ ]

उपसर्गाः—दिव्य मानुप तैरश्चा ऽऽत्मसवेदनीयभेदाचतुर्विधाः उपप्लवास्तान् हरति—अपनयतीत्युपसर्गहरः, शासनाधिष्ठायकत्वात् प्रत्यूहनिवारयिता । तथाभूत' पार्श्व.—पार्श्वयक्षो यस्य स तथा तम् । अनुस्वारस्त्वार्पत्वादलाक्षणिक , यथा—"[९]देवनागसुवण्ण" इति । उपसर्गहरा वा धरणे-

---

एपाऽसौ त्रिपुरा हृदि द्युतिरिवोष्णांशो सदाहस्थिता
छिन्द्याद् व सहसा पदैस्त्रिभिरघ ज्योतिर्मयी वाङ्मयी ॥ १ ॥"

१ 'सूचनात्' इति क पाठ , 'रचितात्' इति ग पाठ ।

२ एतदुत्तरार्धच्छाये यथा—

" पचविहनमोक्कार करेमि एएहिं हेऊहिं"
मार्गोऽविप्रणाश आचारो विनयता सहायत्वम् ।
पञ्चविधनमस्कार करोम्येतैर्हेतुभि ॥

३ 'पास' इति पृथक् पद वा । ४ ' उपसर्गहर पश्य ( अथवा प्राश पाश वा )' इत्यपि सम्भवति । ५ घन कर्ममुक्त इत्यपि सम्भवति । ६ ' विपगृहत्त्वप०' 'विपगृहविप०' वा इत्यपि सम्भवति । ७ 'नश श ' ( सिद्ध० २-३-७३ ) इति सूत्रण 'निर्णाश' स्यात्, परन्तु व्याख्यात्रितये श्रीपूर्णचन्द्रीयवृत्तावपि प्रयोगोऽय दरीदृश्यते । ८ 'कल्याणआवासम्' इत्यपि सम्भवति ।

९ पुक्खरवरेत्यपरनाम्न श्रुतस्तवस्य चतुर्थपद्यस्य द्वितीयपादगतोऽय पाठ । सम्पूर्णं पद्य तु यथा—

"सिद्धे भो पयओ णमो जिणमए नदी स्या सजमे
देवनागसुवण्णकिन्नरगणस्सब्भूअभावच्चिए ।
लोगो जत्थ पइट्ठिओ जगमिण तेलुक्कमच्चासुर
धम्मो वड्ढउ सासओ विजयओ धम्मुत्तर वड्ढउ ॥"—शार्दूलविक्रीडितम्

न्द्रादयः पार्श्वे–समीपे सततसन्निहितत्वात् यस्य तम् । अथवा उपसर्गहरमिति पृथक् । पश्यति कालत्रयवर्ति वस्तुजातमिति पश्यस्तम् । प्राकृतव्युत्पत्त्या 'पास' इति । यद्वा प्रगता आशा यस्य स प्राशस्त, निराकाङ्क्षमित्यर्थः । पार्श्व–श्रीपार्श्वनाथ 'वंन्दामि' त्ति वन्दे–नमस्करोमि । तथा कर्माणि ज्ञानावरणीयाद्यष्ट तानि जीवचन्द्रमसो ज्ञानांशुमण्डलच्छादकत्वाद् घना इव–जलदा इव कर्मघनाः,

> "स्थितः शीतांशुवज्जीवः, प्रकृत्या भावशुद्धया ।
> चन्द्रिकावच्च विज्ञान, तदावरणमभ्रवत् ॥ १ ॥"

इति वचनात्, तेभ्यो मुक्तः–पृथग्भूतः कर्मघनमुक्तस्तम् । अत्र चन्द्ररूपकाभावेऽपि विशेषणान्यथानुपपत्त्या तदवगमः । अथवा आर्षत्वात् घनशब्दस्य विशेषणत्वेऽपि परनिपातात् घनानि–दीर्घकालस्थितिकानि बहुप्रदेशाग्राणि वा यानि कर्माणि घातिकर्माणि तैर्मुक्त–त्यक्तम्, उत्पन्नकेवलज्ञानमित्यर्थः । तथा विषधरा–अनन्त-वासुकि-तक्षक कर्कोट-पद्म महापद्म-शङ्खपाल-कुलिक जय-विजयलक्षणदशनागकुलजाता नागास्तेषा विष पार्थिवादिभेदभिन्न निर्नाशयति–निश्चितमपहरति (इति) विषधरविषनिर्नाशस्तम् । भगवन्नामपूतमन्त्रजापाद् हि सर्वविषधरविषनाशः सुप्रतीत एव मान्त्रिकाणाम् । यद्वा विष–पानीय प्रस्तावात् 'मणिकर्णिका'जल तत्र 'घर' ति गृह–निवासो यस्यासौ विषगृहः । प्रायेण 'वाराणसी'वासिनः पञ्चाग्नितपश्चरण 'मणिकर्णिका'तीर एव कुर्वाणा दृश्यन्ते । स च सामर्थ्यात् कमठमुनिस्तस्य वृष–धर्म लौकिकैर्धर्मतया गृह्यमाणत्वात् पञ्चाग्नितपश्चर्यालक्षण निर्नाशयति य, प्रज्वलज्ज्वलनदह्यमानकाष्ठकोटरान्तर्म्रियमाणसर्पप्रदर्शनेन मातुर्लोकाना च मनसि तत्तपसोऽधर्मरूपत्वनिश्चायनात् तम् । अनेन गृहस्थावस्थानदातसूचित परमकारुणिकत्व च कुमार्गनिर्लोठनात् । अथवा विष–मिथ्यात्वकषायादिलक्षण भावविष धारयन्तीति विषधरा विषगृहा वा मिथ्यात्वकषायादिदोषदूषितात्मानः प्राणिनः तेषा विष यथोक्तरूपमेव निर्नाशयति–निजवचनामृतरसोपयोजनेनापगमयतीति विषधरविषनिर्नाशो विषगृहविषनिर्नाशो वा तम्, तथा मङ्गलानि च विपदुपशमरूपाणि, कल्याणानि च सम्पदुत्कर्षरूपाणि तेषा उभयेषामप्यावास इवावासः–क्रीडास्थान तम् । अत एव हि भगवन्त मङ्गलकल्याणावास पर्युपासीना अपि तदुभयभाजन भवेयु' ।

---

> [ सिद्धा ' भो प्रयतो नमो जिनमताय नन्दि सदा सयमे
> देवनागसुवर्णकिन्नरगणसद्भूतभावार्चिताय ।
> लोको यत्र प्रतिष्ठितो जगदिद त्रैलोक्यमर्त्यासुर
> धर्मा वर्धता शाश्वतो विजयता धर्मोत्तरं वर्धताम् ॥ ]

१ 'वन्दामि इति' इति क पाठ । २ 'आर्षत्वेन' इति ख पाठ । ३ 'भूत' इति ग-पाठ । ४ श्रीमणिकर्णिकाष्टक मुद्रित वृहत्स्तोत्रमुक्ताहारे (पृ० ३१९) । ५ 'तपश्चर्यादि–' इति ख पाठ । ६ 'सर्पोपदर्श०' इति ख पाठ, 'सर्पेऽपि दर्श०' इति ग पाठ ।

"नात्यद्भुत भुवनभूषणभूत ! नाथ ! भूतैर्गुणैर्भुवि भवन्तमभिष्टुवन्त' ।
तुल्या भवन्ति भवतो ननु तेन किं वा भूत्याश्रित य इह नात्मसम करोति ॥ १ ॥"
–( भक्तामरस्तोत्रे श्लो० १० )

इति ( श्रीमानतुङ्गसूरि )वचनात् तमेवभूत पार्श्वं वन्दे इति सम्बन्ध. ॥

अय च स्तवोऽनुज्झितश्रीपार्श्वनाथमन्त्रविधिभि. पार्श्वयक्ष श्रीपद्मावती-धरणेन्द्रैरधिष्ठित इति तत्पक्षोऽपि व्याख्यायते—

तत्र पासं इति पार्श्वं–पार्श्वयक्षम् । किंविशिष्टम् ? उपसर्गहर–सम्यग्दृशा विघ्नोपशम-कर्तारम् । तथा पाशोऽस्या वामहस्तेऽस्तीत्यभ्रादित्वात् मत्वर्थीये प्रत्यये पाशा–पद्मावती ता च । किंविशिष्टाम् ? 'काम्यघनमुत्का' काम्य –कमनीयो घन'–शरीर तेन करणभूतेन मुद्–हर्षोऽर्थात् द्रष्टृणा यस्या. सकाशात् सा काम्यघनमुत्का, दिव्यवपुषा प्रमोदजनिकेत्यर्थ ताम् । विषधरो–जलधरोऽर्थात् कमठासुरसम्बन्धी तस्य विष–जलं निर्नाशयति निजफणातपत्र-धारणेन वारयति (इति) विषधरविषनिर्नाशो–धरणेन्द्रस्त च । मङ्गलकल्याणावासमिति प्राग्वत् अथवा मङ्गलकेल्पश्रेयस्करणप्रगुणा या आज्ञा–भगवच्छासन तया आ–समन्तात् वासना वासो वा भावना यस्य त, कल्याणकारिभगवदाज्ञाभावितमनसमित्यर्थः । एतास्त्रीनपि वन्दे–अभिष्टौमि । 'वदुङ् अभिवादनस्तुत्योः' ( सिद्ध० धा० ) इति वचनात् । इति गाथार्थ. ॥ १ ॥

## श्रीसिद्धिचन्द्रगणिकृता व्याख्या

अथ पञ्चाशीत्यधिकशताक्षरमानस्य उपसर्गहरस्तोत्रस्येय(मा)माद्या गाथामाह—उवसग्गेति । अह श्रीपार्श्व–पार्श्वनाथ वन्दामि–अभिष्टौमि 'वदुङ् अभिवादनस्तुत्योः' (सिद्ध० धा०) इति धातो' रूपम् । कथम्भूत पार्श्वम् ? 'उपसर्गहरम्' उपसर्गान्–देवादिकृतान् उपद्रवान् हरति –निराकरोतीति उपसर्गहरस्तथाभूत पार्श्वनामा यक्षो यस्य स तथा त उपसर्गहरपार्श्वं इति 'बहुव्रीहि' । प्राकृतत्वादनुस्वार । "उपसर्ग उपद्रव " इति हैम (अभि० का० २, श्लो० ३९) । अथवा उपसर्गहरमिति पृथगेव पार्श्वविशेषणम् । पुन' कथम्भूतम् ? 'पाशम्' पश्यति कालत्रय-वर्तिवस्तुजातमिति पाश त पाशम् 'तत्पुरुष' । प्राकृतत्वाद् दन्त्यसकारनिर्देशः । यदिवा प्रगता आशा–आकाङ्क्षा यस्य स प्राशस्त प्राश इति 'बहुव्रीहिः' । निराकाङ्क्षमित्यर्थः । पुनः कथम्भू-तम् ? 'कर्मघनमुक्तम्' कर्माणि–ज्ञानावरणीयादीन्येव जीवचन्द्रमसो ज्ञानांशुमण्डलाच्छादकत्वात् घना इव घना. कर्मघना इति 'कर्मधारय.', तत. कर्मघनेभ्यः–कर्ममेघेभ्यो मुक्त. कर्मघनमुक्तः त कर्मघनमुक्त इति 'तत्पुरुषः' ।

---

१ 'भूषण ! भूतनाथ !' इत्यपि सम्भवति ।

२ एतत्पक्षे छाया यथा—
उपसर्गहर पार्श्वं पाशां वन्दे काम्यघनमुत्काम् । विष० मङ्गल० मङ्गलकल्पाज्ञावास वा ॥

३ 'कल्याणश्रेय०' इति ख पाठ ।

"घनः सान्द्रे दृढे दार्ढ्ये विस्तारे मुद्गरेऽम्बुदे ।
सङ्घे मुस्ते ( घन मध्यनृत्तवाद्यप्रकारयोः )" ॥

इति हैमानेकार्थः (का० २, श्लो० २७४)। अथवा आर्षत्वाद् घनशब्दस्य परनिपाते घनानि-दीर्घकालस्थितिकानि प्रदेशाग्राणि वा यानि कर्माणि तेभ्यो मुक्त-पृथग्भूतमिति व्याख्येयम्। पुन' कथम्भूतम्? 'विपधरविपनिर्नाश' विपधराः-अनन्त-वासुकि-तक्षक-कर्कट-पद्म-महापद्म-शङ्खपाल कुलिक-जय-विजयलक्षणा दश तेपा विप पार्थिनादिभेदभिन्न नितरा नाशयतीति विपधरविपनिर्नाशः त विपधरविपनिर्नाश इति 'तत्पुरुप:'। यदिवा विप-पानीय प्रस्तावात् 'मणिकर्णिका'नदीजल तत्र गृह-निवासो यस्य स विपगृहः, स च अर्थात् कमठमुनिस्तस्य दृर्प-धर्म पञ्चाग्नितपश्चर्यारूप निर्नाशयतीति विपगृहदृपनिर्नाश' त विपगृहदृपनिर्नाश इति 'वहुव्रीहिगर्भित 'तत्पुरुप:' । अनेन गृहस्थावस्थावदातः सूचितः। अथवा विप-मिथ्यात्वकपायादिक वारयन्ति ते विपधरा॰ प्राणिनस्तेपा विप-मिथ्यात्वादिरूप निर्नाशयतीति स तथोक्तस्त विपधरविपनिर्नाशमिति व्याख्येयम् । पुन' कथम्भूतम्? 'मङ्गलकल्याणआवास' मङ्गलानि च-श्रेयांसि, कल्याणानि च-सम्पदुत्कर्परूपाणि, तेपामुभयेपामप्यावास इव आवासो मङ्गलकल्याण-आवासस्त मङ्गलकल्याणआवास, मङ्गलकल्याणाना क्रीडामन्दिरमित्यर्थः ॥ १ ॥

## श्रीहर्पकीर्तिसूरिकृता व्याख्या

अथ द्वितीय स्मरण व्याख्यायते—इद च स्मरण वराहमिहिरकृतश्रीसङ्घोपद्रवनिवारणार्थं श्रीभद्रवाहुस्वामिभिः कृतम्, यथा—श्रीभद्रवाहुस्वामिनो भ्राता वराहमिहिरः। स च दीक्षा गृहीत्वा चन्द्रप्रज्ञप्तिसूर्यप्रज्ञप्त्यादिक शास्त्रमधीतवान्। यदा च तस्याचार्यपद न दत्त तदा तस्य महान् प्रद्वेपो जात', रजोहरणादिलिङ्ग विमुच्य पुनर्ब्राह्मण एवाभवत्। ततः पूर्वाधीत-चन्द्रप्रज्ञप्त्यादिसिद्धान्तार्थान् स्मृत्वा सपादलक्षप्रमाण ज्योतिःशास्त्र निर्मितवान्। सिद्धान्तादुद्धृतत्वात् सत्य च जातम्। वराहमिहिरेण तु द्वादशाब्दानि गच्छे स्थितवता पूर्वादिसिद्धान्त-मधीयानेन सर्व ज्योतिःशास्त्रमन्यदपि विद्यामन्त्रयोगचूर्णादि ज्ञातम्। तद्विप्रतारितब्राह्मणैरेवमुच्यते-यदय वराहमिहिरः सकलशास्त्रपारगामी परपुरप्रवेशाकाशगामिन्यादिविद्यास्थान-मभूत्। ततोऽनेन गगनमण्डले द्वादश वर्षाणि ज्योतिश्चक्रेण सह सञ्चरता सूर्यादिग्रहाणाम् अश्वि-

---

१ "सहितैकपदे निल्या, निल्या धातूपसर्गयो ।
निल्या समासे वाक्ये तु, सा विवक्षामपेक्षते ॥ १ ॥"

इत्यनेन सन्धिप्रसङ्गे सत्यपि 'श्रीआदिनाथ नतनाकिनाथ' ( श्रीसुमतिकल्लोलमुनिविरचिते ऋपभस्तवने ), 'श्रीइन्द्रभूतिं वसुभूतिपुत्र ( श्रीदेवानन्दसूरिकृते गौतमाष्टके ), 'वरधर्मकीर्तिऋपभो ( श्रीधर्मघोपसूरिप्रणीते अष्टापदकल्पे ), 'शरत्सुदाचि॰' ( श्रीजिनप्रभसूरिविरचितायां अथकल्पलताया प्रशस्तौ पृ० ७३ ) इत्यादिवद् अत्रापि सन्धरभाव । अपरश्चायमेव प्रयोगो वर्तते श्रीपूर्णचन्द्राचार्यविरचिताया उपसर्गहरस्तोत्रलघुवृत्तौ।

२ 'सर्वोपद्रव॰' इति क पाठ । ३ 'स्वैव' इति ख पाठ । ४ 'हणमश्वि॰' इति ख पाठ ।

"नात्यद्भुतं भुवनभूषणभूत ! नाथ ! भूतैर्गुणैर्भुवि भवन्तमभिष्टुवन्त' ।
तुल्या भवन्ति भवतो ननु तेन कि वा भूत्याश्रित य इह नात्मसम करोति ॥ १ ॥"
–( भक्तामरस्तोत्रे श्लो० १० )

इति ( श्रीमानतुङ्गसूरि )वचनात् तगेवभूत पार्श्वं वन्दे इति सम्बन्ध' ॥

अय च स्तवोऽनुज्झितश्रीपार्श्वनाथसन्निधिभि. पार्श्वयक्ष श्रीपद्मावती-धरणेन्द्रैरधिष्ठित इति तत्पक्षोऽपि व्याख्यायते—

तत्र पास इति पार्श्व–पार्श्वयक्षम् । किंविशिष्टम् ? उपसर्गहर–सम्यग्दृशा विघ्नोपशम-कर्तारम् । तथा पाशोऽस्या वामहस्तेऽस्तीत्यश्रादित्वात् मत्वर्थीये प्रत्यये पाशा–पद्मावती ता च । किंविशिष्टाम् ? 'काम्यघनमुत्का' काम्य –कमनीयो घन –शरीर तेन करणभूतेन मुद्–हर्षोऽर्थात् द्रष्टृणा यस्या सकाशात् सा काम्यघनमुत्का, दिव्यवपुषा प्रमोदजनिकेत्यर्थ ताम् । विषधरो–जलधरोऽर्थात् कमठासुरसम्बन्धी तस्य विष–जल निर्नाशयति निजफणातपत्र-धारणेन वारयति (इति) विषधरविषनिर्नाशो–धरणेन्द्रस्त च । मङ्गलकल्याणावासमिति प्राग्वत् अथवा मङ्गलकल्पश्रेयस्करणप्रगुणा या आज्ञा–भगवच्छासन तया आ–समन्तात् वासना वासो वा भावना यस्य त, कल्याणकारिभगवदाज्ञाभावितमनसमित्यर्थः । एतास्त्रीनपि वन्दे–अभि-ष्टौमि । 'वदुङ अभिवादनस्तुत्योः' ( सिद्ध० धा० ) इति वचनात् । इति गाथार्थ. ॥ १ ॥

## श्रीसिद्धिचन्द्रगणिकृता व्याख्या

अथ पञ्चाशीत्यधिकशताक्षरमानस्य उपसर्गहरस्तोत्रस्येय(मा)माद्या गाथामाह—उवसग्गेति । अह श्रीपार्श्व–पार्श्वनाथ वन्दामि–अभिष्टौमि 'वदुङ् अभिवादनस्तुत्यो.' (सिद्ध० धा०) इति धातो' रूपम् । कथम्भूत पार्श्वम् ? 'उपसर्गहरम्' उपसर्गान्–देवादिकृतान् उपद्रवान् हरति –निराकरोतीति उपसर्गहरस्तथाभूत पार्श्वनामा यक्षो यस्य स तथा त उपसर्गहरपार्श्व इति 'बहुव्रीहिः' । प्राकृतत्वादनुस्वार । "उपसर्ग उपद्रव " इति हैम. (अभि० का० २, श्लो० ३९) । अथवा उपसर्गहरमिति पृथगेव पार्श्वविशेषणम् । पुन. कथम्भूतम् ? 'पाशम्' पश्यति कालत्रय-वर्तिवस्तुजातमिति पाश त पाशम् 'तत्पुरुष.' । प्राकृतत्वाद् दन्त्यसकारनिर्देशः । यदिवा प्रगता आशा–आकाङ्क्षा यस्य स प्राशस्त प्राश इति 'बहुव्रीहि.' । निराकाङ्क्षमित्यर्थः । पुनः कथम्भूतम् ? 'कर्मघनमुक्तम्' कर्माणि–ज्ञानावरणीयादीन्येव जीवचन्द्रमसो ज्ञानांशुमण्डलाच्छादकत्वात् घना इव घना. कर्मघना इति 'कर्मधारय.', तत. कर्मघनेभ्य.–कर्ममेघेभ्यो मुक्त. कर्मघनमुक्तः त कर्मघनमुक्त इति 'तत्पुरुषः' ।

---

१ 'भूषण ! भूतनाथ !' इत्यपि सम्भवति ।

२ एतत्पक्षे छाया यथा—
उपसर्गहर पार्श्व पाशां वन्दे काम्यघनमुत्काम् । विष० मङ्गल० मङ्गलकल्पाज्ञावासं वा ॥

३ 'कल्याणश्रेय०' इति ख पाठ ।

"घनः सान्द्रे दृढे दार्ढ्ये विस्तारे मुद्गरेऽम्बुदे ।
सङ्घे मुस्ते ( घन मध्यनृत्तवाद्यप्रकारयोः )" ॥

इति हैमानेकार्थः (का० २, श्लो० २७४)। अथवा आर्षत्वाद् घनशब्दस्य परनिपाते घनानि-दीर्घकालस्थितिकानि प्रदेशाग्राणि वा यानि कर्माणि तेभ्यो मुक्त-पृथग्भूतमिति व्याख्येयम्। पुनः कथम्भूतम्? 'विषधरविषनिर्णाशं' विषधराः-अनन्त-वासुकि-तक्षक-कर्कोट-पद्म-महापद्म-शङ्खपाल-कुलिक-जय-विजयलक्षणा दश तेषां विषं पार्थिवादिभेदभिन्नं नितरां नाशयतीति विषधरविषनिर्णाशः तं विषधरविषनिर्णाशं इति 'तत्पुरुषः'। यद्वा विषं-पानीयं प्रस्तावात् 'मणिकर्णिका'नदीजलं तत्र गृह-निवासो यस्य स विषगृहः, स च अर्थात् कमठमुनिस्तस्य वृष-धर्मं पञ्चाग्नितपश्चर्यारूपं निर्णाशयतीति विषगृहवृषनिर्णाशः तं विषगृहवृषनिर्णाशं इति 'बहुव्रीहिगर्भित 'तत्पुरुषः'। अनेन गृहस्थावस्थावदातः सूचितः। अथवा विषं-मिथ्यात्वकषायादिकं धारयन्ति ते विषधराः प्राणिनस्तेषां विषं-मिथ्यात्वादिरूपं निर्णाशयतीति स तथोक्तस्तं विषधरविषनिर्णाशमिति व्याख्येयम्। पुनः कथम्भूतम्? 'मङ्गलकल्याणआवासं' मङ्गलानि च-श्रेयांसि, कल्याणानि च-सम्पदुत्कर्षरूपाणि, तेषामुभयेषामप्यावास इव आवासो मङ्गलकल्याणआवासस्तं मङ्गलकल्याणआवासं, मङ्गलकल्याणानां क्रीडामन्दिरमित्यर्थः ॥ १ ॥

## श्रीहर्षकीर्तिसूरिकृता व्याख्या

अथ द्वितीयं स्मरणं व्याख्यायते—इदं च स्मरणं वराहमिहिरकृतश्रीसङ्घोपद्रवनिवारणार्थं श्रीभद्रबाहुस्वामिभिः कृतम्, यथा—श्रीभद्रबाहुस्वामिनो भ्राता वराहमिहिरः। स च दीक्षां गृहीत्वा चन्द्रप्रज्ञप्तिसूर्यप्रज्ञप्त्यादिकं शास्त्रमधीतवान्। यदा च तस्याचार्यपदं न दत्तं तदा तस्य महान् प्रद्वेषो जातः, रजोहरणादिलिङ्गं विमुच्य पुनर्ब्राह्मण एवाभवत्। ततः पूर्वाधीतचन्द्रप्रज्ञप्त्यादिसिद्धान्तार्थान् स्मृत्वा सपादलक्षप्रमाणं ज्योतिःशास्त्रं निर्मितवान्। सिद्धान्तादुद्धृतत्वात् सत्यं च जातम्। वराहमिहिरेण तु द्वादशाब्दानि गच्छे स्थितवता पूर्वादिसिद्धान्तमधीयानेन सर्वं ज्योतिःशास्त्रमन्यदपि विद्यामन्त्रयोगचूर्णादि ज्ञातम्। तद्विप्रतारितब्राह्मणैरेवमुच्यते-यदयं वराहमिहिरः सकलशास्त्रपारगामी परपुरप्रवेशाकाशगामिन्यादिविद्यास्थानमभूत्। ततोऽनेन गगनमण्डले द्वादश वर्षाणि ज्योतिश्चक्रेण सह सञ्चरता सूर्यादिग्रहाणाम् अधि-

१ "संहितैकपदे नित्या, नित्या धातूपसर्गयोः ।
नित्या समासे वाक्ये तु, सा विवक्षामपेक्षते ॥ १ ॥"

इत्यनेन सन्धिप्रसङ्गे सत्यपि 'श्रीआदिनाथ नतनाकिनाथ' (श्रीसुमतिकल्लोलमुनिविरचिते ऋषभस्तवने), 'श्रीइन्द्रभूतिं वसुभूतिपुत्र (श्रीदेवानन्दसूरिकृते गौतमाष्टके), 'वरधर्मकीर्तिरूपभो (श्रीधर्मघोषसूरिप्रणीते अष्टापदकल्पे), 'शरच्चन्द्ररुचि०' (श्रीजिनप्रभसूरिविरचितायां अथकल्पलतायां प्रशस्तौ पृ० ७३) इत्यादिवद् अत्रापि सन्ध्यभावः । अपरञ्चायमेव प्रयोगो वर्तते श्रीपूर्णचन्द्राचार्यविरचितायां उपसर्गहरस्तोत्रलघुवृत्तौ ।

२ 'सर्वोपद्रव०' इति क पाठः । ३ 'स्वैव' इति ख पाठः । ४ 'इणमधि०' इति ख पाठः ।

न्यादिनक्षत्राणां सञ्चार' सम्यक् निरीक्षितः । ततस्त चेतसि धृत्वा मर्त्यलोकमवतीर्य लोकोपकारार्थं ज्योति शास्त्र निर्मितमिति । ततः स तेन दम्भेन मि॰ यादृष्टीन् विप्रतारयन् तेभ्यो दानादिकं पूजां च लभमान तया चौलिकप्रसिद्ध्या प्रमोद दधान॰ कालमनैषीत् । अन्ते चाज्ञानतपोऽनुष्ठानेन काल कृत्वा व्यन्तरेषूत्पन्न । ततो विभङ्गज्ञानविज्ञानेन पूर्वभवस्वरूप ज्ञात्वाऽर्हत्प्रवचने प्रद्वेषमुद्वहन् पूर्ववैरनिर्यातनार्थमार्हतसङ्घे उपसर्गान् कर्तुमारेभे । तत श्राद्धैरपि तद् व्यन्तरकृतमुपद्रव ज्ञात्वा सर्वैरप्यालोच्य तत्स्वरूपगर्भा विज्ञप्तिका श्रीभद्रबाहुस्वामिगुरुभ्य प्रेषिता । तामवगाह्य श्रीभद्रबाहुस्वामिभिस्तदुपसर्गनिवारणार्थं महाप्रभाव श्रीउपसर्गहरस्तोत्र नूतनं कृत्वा सङ्घ प्रेषितम् । तत सर्वोऽपि सङ्घस्तत्पठनप्रभावान्निरुपद्रवो जात॰ । अत इद स्मरण ऐहलौकिकपारलौकिकसुखाभिलाषिभिर्नर सर्वदा स्मरणीयम् । यत —

"स्तोत्रस्याष्टातिरिक्त शत य , कुर्याज्जाप पञ्चगाथात्मकस्य ।
तस्यानश्य मङ्क्षु नश्यन्ति विघ्ना–स्त नि'शेषा वृण्वते सिद्धयश्च ॥ १ ॥"–शालिनी

पूर्वं किलास्य स्मरणस्य सप्त गाथा अभूवन् । ततो गाथाद्वय श्रीभद्रबाहुस्वामिभिर्भाण्डागारे स्थापितम् । साम्प्रत तु पञ्चैव गाथा प्रवर्तन्ते । अतोऽस्य पञ्चाशीत्यधिकशताक्षर १८५–मानस्य स्तोत्रस्येयमादिगाथा—'उवसग्गहर पास' इति । अह पार्श्व–श्रीपार्श्वनाथ वन्दे–नमस्करोमि । कथम्भूत पार्श्वम्? 'उपसर्गहरपार्श्वं' उपसर्गाणा–देव मनुष्य-तिर्यक्कृतोपद्रवाणा हरो–निवारक पार्श्वनामा शासनाधिष्ठायक॰ सेवकयक्षो यस्य स तम् । यद्वा उपसर्गहर पार्श्व–समीप यस्य स तम् । अथवा उपसर्गहरा–उपसर्गनिवारका धरणेन्द्रादय॰ पार्श्वे यस्य स तम् । प्राकृतत्वाद् बिन्दुरलाक्षणिक । यद्वा उपसर्गहरमिति पृथक् पदम् । प्राशमिति पृथक् पदम् । उपसर्गान् हरतीत्युपसर्गहर तम्, प्रगता आशा–प्रार्थना वाञ्छा यस्य स प्राशस्तम् । पुन॰ कथम्भूत पार्श्वम्? 'कर्मघनमुक्त' ज्ञानावरणीयाद्यष्टकर्माण्येव घना–मेघा॰, ज्ञानाच्छादकत्वात्, तेभ्यो मुक्तो–रहित पृथक् । (उक्त च)—

"स्थित शीतांशुवज्जीव , प्रकृत्या भावशुद्धया ।
चन्द्रिकावच्च विज्ञान, तदावरणमभ्रवत् ॥ १ ॥"

ज्ञान चन्द्रिकावत् कर्माणि मेघवत् तदावरण अत एव कर्मघनमुक्तम् । अथवा [illegible]न–दीर्घकालस्थितिकानि च तानि कर्माणि च कर्मघनानि । प्राकृतत्वात् [illegible] मुक्तो–रहितस्तम्, उत्पन्नकेवलज्ञानमित्यर्थ॰ । पुनः कथम्भूत [illegible] विषधराणा–सर्पाणा विष निर्नाशयति–निश्चितमपहरतीति विष॰ [illegible] निर्नाशो भवतीति । अथवा विष–मिथ्यात्वकषायलक्षण

१ 'श्रीपार्श्व–श्रीपार्श्वनाथ' इति क पाठ । २ 'मन्त्रतदैव विष'

भावविप धारयन्तीति विपधरा'-मिथ्यात्वकषायादिदोषदूषितात्मान' प्राणिन' तेपा विष-मिथ्यात्वादि निर्नाशयति-जिनवचनामृतरसप्रयोजनेनापगमयतीति तम् । पुनः कथम्भूत पार्श्वम्? 'मङ्गलकल्याणावास' मङ्गल-दुरितोपशामक कल्याण-नीरोगत्व सम्पदुत्कर्षरूप वा, तयोः आवासः-स्थान गृह यः स तम् । अत एव मङ्गलकल्याणावास श्रीपार्श्व सेवमानाः पुरुषा अपि मङ्गलकल्याणभाजो भवन्तीति युक्तमेव ॥ १ ॥

जि० सू०—इदानीं द्वितीयगाथा व्याक्रियते—

विसहरफुलिंगमंत[1], कठे धारेइ जो सया मणुओ ।
तस्स गहरोगमारी-दुट्ठजरा जति उवसामं ॥ २ ॥

[ विषधरस्फुलिङ्गमन्त्रं[3] कण्ठे धारयति यः सदा मनुजः[4] ।
तस्य ग्रहरोगमारीदुष्टज्वरा यान्त्युपशमम्[5] ॥ २ ॥ ]

'विसहर' त्ति 'फुलिङ्ग' त्तिशब्दाभ्या गर्भितत्वाद् विपधरस्फुलिङ्ग इति नाम स चासौ मन्त्रश्च मनसस्त्राणयोगान्मन्त्रणाद् वा गुप्तभापणाद् वा विपधरस्फुलिङ्गमन्त्रस्त भगवन्नामगर्भितमष्टादशाक्षरात्मकमादौ तारत्रैलोक्यकमलार्हह्रीजैरन्ते च तत्प्रणिपातबीजाभ्यामष्टाविंशतिवर्णात्मक मन्त्रविशेप कण्ठे यो मनुजः-मनुष्यः । यद्वा मनु'-मन्त्रस्त गच्छति "सर्वे गत्यर्था ज्ञानार्थाः" इति वचनात् जानातीति मनुगो-मान्त्रिक' । सदा-सर्वकाल धारयति-धत्ते कण्ठस्थ करोतीति यावत् । कण्ठस्थकरणेन चाहर्निश तज्जापविधिर्व्यज्यते । तस्य किं भवतीत्याह-तस्य शश्वन्मन्त्रजपितुर्ग्रहाश्च भूत-प्रेत ब्रह्मराक्षसादय' सूर्यादयो वाऽशुभगोचरवर्तिनः रोगाश्च-वात-पित्त श्लेष्म-सन्निपातजा व्याधिप्रभेदा॰ मारिश्च-सर्वगमृत्युलक्षणमशिव दुष्टज्वराः एकान्तर-द्वितीयान्तर-तृतीयान्तर चातुर्थिकादयोऽथवा दुष्टा-दुष्टजना कुपितनृपा वा ज्वराश्च शीतज्वराद्या वा तापज्वराद्या यान्ति-गच्छन्ति उपशमन-निवृत्तिं, उपशाम्यन्तीत्यर्थ' । 'उवसम' ति वक्तव्ये आर्षत्वाद् ह्रस्वाभाव' । यथा-"उवसाम उवणीया गुणमहया जिणचरित्तसरिस पि" ( आव० नि० गा० ११८, विशेषा० गा० १३०६ ) त्ति । एव च व्याख्यायमाने मा भूदधिकृतमन्त्रजपितु' स्वार्थसम्पत्तिमात्रफलभाक्तया कुक्षिम्भरित्वमिति परार्थसम्पत्तिरपि व्याख्यायते । तस्य मन्त्रजपितुर्ग्रहाद्या

१ 'त' इति पृथक् पद वा । २ 'ठ' इति पृथक् पद वा । ३ विपधरस्फुलिङ्गम त्वा विप० लिङ्गाम त्वां विसहरफुलिङ्गमन्त वा इति सम्भवति । ४ 'मनुग' इत्यपि सम्भवति । ५ 'यान्ति तु वशामम्' इत्यपि सम्भवति । ६ 'हर इति' इति क ख पाठ । ७ 'व्यन्तर व्यन्तर' इति प्रतिभाति ।

८ एतदुत्तरार्धच्छाये यथा—

पडिवायति कसाया किं पुण सेसे सरागत्थे ? ॥"
उपशममुपनीता गुणमहता जिनचारित्रसदृशमपि ।
प्रतिपातयन्ति कषाया किं पुन शेषाम् सरागस्थान् ? ॥

० 'कृत्स्नमन्त्र' इति ग-पाठ ।

न्यादिनक्षत्राणां सञ्चारः सम्यक् निरीक्षितः । ततस्त चेतसि धृत्वा मर्त्यलोकमवतीर्य लोकोपकारायेद ज्योतिःशास्त्र निर्मितमिति । तत स तेन दम्भेन मिथ्यादृष्टीन् विप्रतारयन् तेभ्यो दानादिका पूजा च लभमान. तया चैहिकप्रसिद्ध्या प्रमोद दधान कालमनैषीत् । अन्ते चाज्ञानतपोऽनुष्ठानेन काल कृत्वा व्यन्तरेषूत्पन्न । ततो विभङ्गावधिज्ञानेन पूर्वभवस्वरूप ज्ञात्वाऽर्हत्प्रवचने प्रद्वेषमुद्वहन् पूर्ववैरनिर्यातनार्थमार्हतसङ्घे उपसर्गान् कर्तुमारेभे । तत. श्राद्धैरपि तद् व्यन्तरकृतमुपद्रव ज्ञात्वा सर्वैरप्यालोच्य तत्स्वरूपगर्भा विज्ञप्तिका श्रीभद्रबाहुस्वामिगुरुभ्य प्रेषिता । तामवधार्य श्रीभद्रबाहुस्वामिभिस्तदुपसर्गनिवारणार्थं महाप्रभाव श्रीउपसर्गहरस्तोत्र नूतन कृत्वा सर्वत्र प्रेषितम् । तत सर्वोऽपि सङ्घस्तत्पठनप्रभावान्निरुपद्रवो जातः । अत इद स्मरण ऐहलौकिकपारलौकिकसुखाभिलाषिभिर्नर. सर्वदा स्मरणीयम् । यत.—

"स्तोत्रस्याष्टातिरिक्त शत य., कुर्याज्जाप पञ्चगाथात्मकस्य ।
तस्यावश्य मङ्क्षु नश्यन्ति विघ्ना-स्त निःशेषा वृण्वते सिद्धयश्च ॥ १ ॥"—शालिनी

पूर्व किलास्य स्मरणस्य सप्त गाथा अभूवन् । ततो गाथाद्वय श्रीभद्रबाहुस्वामिभिर्भाण्डागारे स्थापितम् । साम्प्रत तु पञ्चैव गाथा. प्रवर्तन्ते । अतोऽस्य पञ्चाशीत्यधिकशताक्षर १८५—मानस्य स्तोत्रस्येयमादिगाथा—'उवसग्गहर पास' इति । अह पार्श्व—श्रीपार्श्वनाथ वन्दे—नमस्करोमि । कथम्भूत पार्श्वम्? 'उपसर्गहरपार्श्वं' उपसर्गाणा—देव-मनुष्य-तिर्यक्कृतोपद्रवाणा हरो—निवारकः पार्श्वनामा शासनाधिष्ठायक सेवकयक्षो यस्य स तम् । यद्वा उपसर्गहर पार्श्व—समीप यस्य स तम् । अथवा उपसर्गहरा—उपसर्गनिवारका धरणेन्द्रादय पार्श्वे यस्य स तम् । प्राकृतत्वाद् बिन्दुरलाक्षणिक' । यद्वा उपसर्गहरमिति पृथक् पदम् । प्राशमिति पृथक् पदम् । उपसर्गान् हरतीत्युपसर्गहर तम्, प्रगता आशा—प्रार्थना वाञ्छा यस्य स प्राशस्तम् । पुन' कथम्भूत पार्श्वम्? 'कर्मघनमुक्त' ज्ञानावरणीयाद्यष्टकर्माण्येव घना—मेघा', ज्ञानाच्छादकत्वात्, तेभ्यो मुक्तो—रहितः पृथक् । (उक्त च)—

"स्थित' शीतांशुवज्जीव', प्रकृत्या भावशुद्धया ।
चन्द्रिकावच्च विज्ञान, तदावरणमभ्रवत् ॥ १ ॥"

जीवश्चन्द्रवत् ज्ञान चन्द्रिकावत् कर्माणि मेघवत् तदावरण अत एव कर्मघनमुक्तम् । अथवा घनानि—निबिडानि—दीर्घकालस्थितिकानि च तानि कर्माणि च कर्मघनानि । प्राकृतत्वात् व्यत्यय. । कर्मघनै —घनकर्मभि. मुक्तो—रहितस्तम्, उत्पन्नकेवलज्ञानमित्यर्थ' । पुन. कथम्भूत पार्श्वम्? 'विषधरविषनिर्नाश' विषधराणा—सर्पाणा विष निर्नाशयति—निश्चितमपहरतीति विष० तम् । भगवन्नाममन्त्रादपि विषधरविषनिर्नाशो भवतीति । अथवा विष—मिथ्यात्वकषायलक्षण

---

१ 'चातीव प्रसिद्ध्या' इति क-पाठ । २ 'श्रीपार्श्व—श्रीपार्श्वनाथ' इति क पाठ । ३ 'मन्त्रादेव विष' इति ख पाठ ।

रोगाश्च मारिश्च दुष्टज्वराश्च ग्रहरोगमारिदुष्टज्वराः इति 'इतरेतरद्वन्द्वः' । 'उवसमं' ति वक्तव्ये आर्षत्वात् ह्रस्वाभावः ॥ २ ॥

ह० व्या०—मन्त्रगर्भितस्यास्य श्रीपार्श्वनाथस्तवस्य महिमानमाह–'विसहर' त्ति । यो मनुजो–मनुष्यः अथवा मनुः–मन्त्रस्तं गच्छति–जानातीति मनुगो–मान्त्रिकः प्रस्तावात् श्रीपार्श्वनाथस्य । एवं विषधरस्फुलिङ्गमन्त्रं सदा–सर्वदा कण्ठे धारयति–कण्ठाधीनं करोति–अहर्निशं पठति तस्य मनुजस्य ग्रहरोगमारिदुष्टज्वराः उपशमं यान्ति । विषधराः–सर्पाः स्फुलिङ्गा–अग्निकणाः तेषां उपलक्षणत्वादन्येषामपि क्षुद्रोपद्रवाणां मन्त्रः प्रतिहन्ता–निवारकस्तम्, अथवा 'विसहर' त्ति 'फुलिङ्ग' त्ति शब्दानां मन्त्रगर्भितत्वाद् विसहरफुलिङ्ग इति मन्त्रः, मनसस्त्राणान्मन्त्रः, मन्त्रणाद्–गुप्तभाषणत्वाद् वा मन्त्रः तम् । भगवन्नामगर्भितोऽष्टादशाक्षरात्मको मन्त्रो यथा–"नमिऊण पास-विसहरव(वि)सहजिणफुलिङ्ग" इति । स चादौ तारत्रैलोक्यकमलाऽर्हद्बीजैः तत्त्वप्रणिपातबी-जाभ्यां चाष्टाविंशत्यक्षरात्मकः । यथा–"ॐ ह्रीँ श्रीँ अर्हं नमिऊण पासविसहरवसहजिणफुलिङ्ग ॐ ह्रीँ श्रीँ अर्हं नमः" इति । अयं च मन्त्रः श्रीधरणेन्द्र-पद्मावतीभ्यां श्रीपार्श्वयक्षेण चाधि-ष्ठितः, एवं मन्त्रं अथवा विसहरफुलिङ्ग इति नामास्त्यस्येति विसहरफुलिङ्गमान् तं विसहरफु-लिङ्गमन्तं श्रीपार्श्वं कण्ठे धारयति–जपति तस्य ग्रहाः–सूर्यादयो गोचरे अशुभाः भूत-प्रेत-पि-शाचादीनां आवेशा वा रोगा–वात-पित्त-श्लेष्म-सन्निपातजा व्याधयः मारिः–मरकोपद्रवः दुष्टा–दुर्जनाः शत्रवश्च ज्वरः–तापः अथवा दुष्टज्वरा–ऐकाहिक-द्व्याहिक-त्र्याहिक-शीतज्वरादि-लक्षणाः एते सर्वेऽप्युपशमन्ति उपशाम्यन्ति–निवृत्तिं यान्ति, तं न पीडयन्तीत्यर्थः । उवसाम इत्यत्रार्षत्वात् ह्रस्वाभावः ॥ २ ॥

जि० सू०—अधुना तृतीया गाथा व्याख्यायते—

चिट्ठउ दूरे मंतो, तुज्झ पणामो वि बहुफलो होइ ।
नरतिरिएसु वि जीवा, पावंति न दुक्खदोगच्चं ॥ ३ ॥
[ तिष्ठतु दूरे मन्त्रः तव प्रणामोऽपि बहुफलो भवति ।
नरतिर्यक्ष्वपि जीवाः प्राप्नुवन्ति न दुःखदौर्गत्यम् ॥ ]

योऽयं मन्त्रः प्राग्व्यावर्णितस्वरूपः स तावद् दूरेऽपि तिष्ठतु–पुरश्चरणोत्तरचरणहोमतपोजपा-दिप्रक्रियासाध्यत्वेन कष्टावहत्वाद् दूरापास्त एवास्तां यावता तव–भवतः कर्मतापन्नस्य प्रणा-मोऽपि प्रशब्दस्य प्रकर्षार्थद्योतकत्वात् विशुद्धश्रद्धापूर्वं कृतो नमस्कारोऽपि–प्रणिपातमात्रमपि 'बहु-फलो' बहूनि सौभाग्या-ऽरोग्य-धन-धान्य-कलत्र-द्विपद-चतुष्पद-राज्य-स्वर्गादीनि फलानि–कार्याणि

१ 'पणाद्' इति ख-पाठ । २ 'अर्हं' इत्येकमक्षरं ज्ञेयम् । ३ 'शय्याधिरोगा' इति ग-पाठ । ४ 'सामत्व(?) साधरत्वात्' इति ख-पाठ । ५ 'दोहग्ग' इत्यपि पाठः दौर्भाग्येस्यर्थः । ६ 'प्रकर्षद्योतक०' इति ग-पाठ ।

उक्तस्वरूपा' । तुशब्दस्यावधारणार्थत्वात् "तु स्याद् भेदेऽवधारणे" इत्यनेकार्थवचनात् यान्त्येव वशाम वश–आयत्तता तया अमन अमः–अवगमन वशामस्त, वशगत्वमित्यर्थ. । अन्ये-ऽपि वर्तमाना ग्रहरोगादय' तस्य वशवर्तिनो भवन्ति, तत्प्रतीकारसामर्थ्यादिति भाव । उक्तं हि बृहद्वृत्तौ–"शान्तिकर्पौष्टिकवश्याकर्षणोच्चाटनस्तम्भनविद्वेषणमारणलक्षणकर्मनिर्माणालंकर्मीणत्वमेतन्मन्त्रस्य" । अस्या गाथाया यद्यपि विषधरस्फुलिङ्गमन्त्रस्य भगवन्नामगर्भितत्वेन वस्तुत स्तुतिरूपताऽस्ति, तथापि भगवद्वारस्तुप्रसङ्गात्-प्रायमाणात्मा दुर्विदग्धाश्चर्चयिष्यन्तीत्यन्यथापि व्याचक्ष्महे । विषधरस्फुलिङ्गे–एतन्नामकर्मतन्त्र(मन्त्र)विशेषे माति–सन्निविशते इति विषधरस्फुलिङ्गमस्तम् । मन्त्रसन्निविष्टमित्यर्थ । अथवा विषधरस्फुलिङ्गममति–गच्छति (इति) विषधरस्फुलिङ्गामस्त, विषधरस्फुलिङ्गाख्यमन्त्रगतमित्यर्थ' । 'लुक्' ( सिद्ध० ८–१–१० ) इति प्राकृतलक्षणेनाकारलोपाद् 'विसहरफुलिंगमं' त्ति सिद्धम् इति त्वा य' कण्ठे धारयति । न च भगवत. कण्ठधारणमनुपपन्नमिति वाच्यम् । परमेश्वरस्यापि मन्त्रादविष्वग्वृत्तित्वेन मन्त्ररूपत्वात् । तथाच मन्त्राधिराजस्तवे श्रीगुणशेखरसूरय —

"न पार्श्वादपरो मन्त्रो, न मन्त्रादपरो विभु' ।
तद्द्वयादपरो नात्मा, ध्यायेदित्येकतानताम् ॥ १ ॥
आत्मा पार्श्वात्मक' पार्श्वो, मन्त्रात्मा तौ तदात्मकौ ।
एक [3]द्विस्त्रयोऽप्येके, नेति तल्लयमावहेत् ॥ २ ॥"

अथवा कण्ठे धारयतीति विषधरस्फुलिङ्गयन्त्ररूप त्वा विद्यामणीकृत्य स्वकण्ठे परिदधातीति । परस्य च कण्ठे परिधापयतीति यथासङ्ख्य स्वार्थपरार्थसम्पत्तिपक्षयोर्योज्यम् । पार्श्वयक्ष-पद्मावती-धरणेन्द्रस्तवपक्षेऽपि तुल्यैव व्याख्या, [4]प्रस्तुतमन्त्रस्य तत्त्रयेण अधिष्ठितत्वात् । इति गाथार्थः ॥ २ ॥

सि० व्या०–विसहरेति । यो (मनुज'–) मनुष्यः यदिवा मनुः–मन्त्रस्त गच्छति–जानातीति मनुगो–मान्त्रिकः । विषधरस्फुलिङ्ग इति नाम स चासौ मन्त्रश्च विषधरस्फुलिङ्गमन्त्रस्त विषधरस्फुलिङ्गमन्त्र इति 'कर्मधारयः' । 'नमिऊणपासविसहरविसहजिणफुलिङ्ग' इति भगवन्नामगर्भितमष्टादशाक्षरात्मक त्रैलोक्यकमलार्हद्बीजैरन्ते च तत्त्वप्रणिपातबीजाभ्यामष्टाविंशत्यक्षरात्मक वा कण्ठे–गले सदा–सर्वकाल धारयति–धत्ते, कण्ठस्थ करोति जपतीत्यर्थ', तस्य मनुष्यस्य मान्त्रिकस्य च ग्रहाः–भूत-प्रेत राक्षसादयः सूर्यादयो वाऽशुभगोचरवर्तिन' रोगाश्च–कास श्वास-भगन्दर-कुष्ठादय' मारिश्च–सर्वगमृत्युलक्षणमशिव दुष्टज्वराश्च–एकान्तर तृतीय-चातुर्थिकादय. अथवा दुष्टा–दुर्जना. कुपितनृपाद्याः ज्वराश्च–शीततापज्वरा. उपशम–निवृत्ति यान्ति, उपशाम्यन्तीत्यथः । ग्रहाश्च

---

१ 'तु भेदे' इति ग पाठ । २ 'कमाणस्व०' इति ख–पाठ, 'कृकर्माण०' इति ग-पाठ । ३ 'द्विस्त्रियो' ३०इति ख–पाठ । ४ अय पाठो ग–प्रत्यामेव ।

रोगाश्च मारिश्च दुष्टज्वराश्च ग्रहरोगमारिदुष्टज्वराः इति 'इतरेतरद्वन्द्वः' । 'उवसमं' ति वक्तव्ये आर्षत्वात् ह्रस्वाभावः ॥ २ ॥

ह० व्या०—मन्त्रगर्भितस्यास्य श्रीपार्श्वनाथस्तवस्य महिमानमाह–'विसहर' त्ति । यो मनुजो–मनुष्यः अथवा मनुः–मन्त्रस्त गच्छति–जानातीति मनुगो–मान्त्रिकः प्रस्तावात् श्रीपार्श्वनाथस्य । एव विपधरस्फुलिङ्गमन्त्र सदा–सर्वदा कण्ठे धारयति–कण्ठाधीन करोति–अहर्निश पठति तस्य मनुजस्य ग्रहरोगमारिदुष्टज्वरा· उपशम यान्ति । विपधराः–सर्पाः स्फुलिङ्गा–अग्निकणाः तेषा उपलक्षणत्वादन्येपामपि क्षुद्रोपद्रवाणा मन्त्रः प्रतिहन्ता–निवारकस्तम्, अथवा 'विसहर' त्ति 'फुलिङ्ग' त्ति शब्दाना मन्त्रगर्भितत्वाद् विसहरफुलिङ्ग इति मन्त्रः, मनसस्त्राणान्मन्त्रः, मन्त्रणाद्–गुप्तभाषणत्वाद् वा मन्त्रः तम् । भगवन्नामगर्भितोऽष्टादशाक्षरात्मको मन्त्रो यथा–"नमिऊण पास-विसहरव(वि)सहजिणफुलिङ्ग" इति । स चादौ तारत्रैलोक्यकमलाऽर्हद्बीजैः तत्त्वप्रणिपातबीजाभ्या चाष्टाविंशत्यक्षरात्मकः । यथा–"ॐ ह्रीँ श्रीँ अर्हं नमिऊण पासविसहरवसहजिणफुलिङ्ग ॐ ह्रीँ श्रीँ अर्हं नम" इति । अय च मन्त्र· श्रीधरणेन्द्र-पद्मावतीभ्या श्रीपार्श्वयक्षेण चाधिष्ठितः, एन मन्त्र अथवा विसहरफुलिङ्ग इति नामास्त्यस्येति विसहरफुलिङ्गमान् त विसहरफुलिङ्गमन्त श्रीपार्श्वं कण्ठे धारयति–जपति तस्य ग्रहाः–सूर्यादयो गोचरे अशुभाः भूत प्रेत-पिशाचादीना आवेशा वा रोगा–वात पित्त-श्लेष्म सन्निपातजा व्याधयः मारिः–मरकोपद्रवः दुष्टा–दुर्जना· शत्रवश्च ज्वरः–तापः अथवा दुष्टज्वरा–ऐकाहिक-द्व्याहिक-त्र्याहिक-शीतज्वरादिलक्षणा· एते सर्वेऽप्युपशमन्ति उपशाम्यन्ति–निवृत्तिं यान्ति, त न पीडयन्तीत्यर्थः । उवसाम इत्यत्रार्षत्वात् ह्रस्वाभाव· ॥ २ ॥

जि० सू०—अधुना तृतीया गाथा व्याख्यायते—

> चिट्ठउ दूरे मतो, तुज्झ पणामो वि बहुफलो होइ ।
> नरतिरिएसु वि जीवा, पावंति न दुक्खदोगच्चं ॥ ३ ॥
> [ तिष्ठतु दूरे मन्त्रः तव प्रणामोऽपि बहुफलो भवति ।
> नरतिर्यक्ष्वपि जीवाः प्राप्नुवन्ति न दुःखदौर्गत्यम् ॥ ]

योऽय मन्त्र· प्राग्व्यावर्णितस्वरूप· स तावद् दूरेऽपि तिष्ठतु–पुरश्चरणोत्तरचरणहोमतपोजपादिप्रक्रियासाध्यत्वेन कष्टावहत्वाद् दूरापास्त एवास्ता यावता तव–भवत· कर्मतापन्नस्य प्रणामोऽपि प्रशब्दस्य प्रकर्षार्थद्योतकत्वात् विशुद्धश्रद्धापूर्व कृतो नमस्कारोऽपि–प्रणिपातमात्रमपि 'बहुफलो' बहूनि सौभाग्या-ऽरोग्य-धन धान्य-कलत्र-द्विपद-चतुष्पद-राज्य-स्वर्गादीनि फलानि–कार्याणि

---

१ 'पगाद्' इति ख–पाठ । २ 'अर्हं' इत्येकमक्षरं ज्ञेयम् । ३ 'शाध्याधिरोगा' इति ख–पाठ । ४ 'सामत्य(?) माधत्वात्' इति ख–पाठ । ५ 'दोहग्ग' इत्यपि पाठ दौर्भाग्येत्यर्थ । ६ 'प्रकर्षद्योतक०' इति ग पाठ ।

यस्य कारणभूतस्य स तथा भवति–सम्पद्यते । प्रणाम इत्येकवचनं च ज्ञापयति यदेकोऽपि नमस्कारो बहुफलो भवति, किं पुनर्बहवः प्रयुक्ता इति । येन च जन्तुना भगवन्तं प्रति नमस्कारमात्रमपि विशुद्धश्रद्धया विहितं सोऽवश्यं सम्यग्दृष्टिः, स च वैमानिकेष्वेव उत्पद्यते, "सम्मद्दिट्ठी जीवो विमाणवज्जं न बन्धए आउ" इति वचनात् । यदि च कदाचित् पूर्वबद्धायुष्कत्वादिना हेतुना भवपारम्पर्येण वा नरेषु तिर्यक्षु वाऽऽगामुत्पत्तिमागाम्यति तदापि भगवन्नमस्कारप्रभावादेव न दुःखभाजनं भूयो भाते (भवति?) इत्येतदेवाह–नरेत्यादि । नराश्च तिर्यञ्चश्चेति 'द्वन्द्व.' तेषु नरतिर्यक्ष्वप्युत्पन्ना जीवाः–प्राणिनो न दुःखदौर्गत्यं प्राप्नुवन्ति । अपिः विस्मये । विस्मयश्च किल नरेषु तिर्यक्षु च दुःखदौर्गत्याभावो दुर्घट इति हेतोः । तत्र दुःखं शारीरं मानसं च । दुर्गतस्य भावो दौर्गत्य–दारिद्र्य, ततः समाहारद्वन्द्वे दुःखदौर्गत्यम् । अयमभिप्रायः—यदि किल कथञ्चिन्नरेषूत्पद्यन्ते ते नमस्कारकर्तारः, तदापि रोगादिरहितत्वेन सद्य सम्पद्यमानमभीहितार्थतया च न शारीरमानसदुःखभाजो भवेयुः, ऋद्धिसमृद्धतया च न जातु दारिद्र्येणोपद्रूयन्ते । तिर्यक्षु चोत्पद्यमानाः कमनीयकनक-रत्न-चिन्तामणि-कल्पद्रुम-पट्टतुरङ्गम-जयकुञ्जरादिभावमासाद्य तांस्तान् पूजाप्रकारान् प्राप्नुवन्तीति । पाठान्तरं वा 'दुक्खदोहग्ग' इति । दुःखं च दौर्भाग्यं चेति 'समाहारद्वन्द्व.' ॥

पार्श्वयक्षादिस्तवपक्षे चैवं नेयम्—तिष्ठतु दूरे मन्त्रः, तव–पार्श्वयक्षस्य पद्मावत्या धरणेन्द्रस्य च प्रणामोऽपि बहुफलो भवति । 'णम प्रह्वत्वे (शब्दे च)' (पा० धा० ९८१) । प्रणमनं प्रणाम.–प्रह्वत्वं प्रह्वीभावः, प्रसादाभिमुख्यमिति यावत् । अत्र तवेति कर्तरि षष्ठी । भगवत्पक्षे च कर्मणि । तथा तव प्रह्वीभावमात्रादेव नरास्तिर्यञ्च इव नरतिर्यञ्चो–नृपशव पांशुपादाः पशुप्राया बालगोपालकृषीवलादयस्तेष्वपि मध्ये जीवा प्राप्नुवन्ति न दुःखदौर्गत्यम् । ते हि प्रायो दुःखिता एवोपलभ्यन्ते । केवलं त्वत्प्रसादात् तेऽपि सततसुखिता एव स्युः । इति गाथार्थः ॥ २ ॥

सि० व्या०—चिट्ठउ त्ति । योऽयं मन्त्रः प्राग् व्यावर्णितः स दूरे तिष्ठतु–दूरे आस्तामित्यर्थः । तव–भवतः प्रणामोऽपि–विशुद्धश्रद्धाकृतो नमस्कारोऽपि बहुफलो भवति–सञ्जायते । बहूनि सौभाग्याऽऽरोग्यादीनि फलानि यस्य स बहुफलः इति 'बहुव्रीहिः' । यतस्तव प्रणामात् जीवाः–प्राणिनः दुःखदौर्गत्यं न प्राप्नुवन्ति–न लभन्त इत्यर्थः । तत्र दुःखं मानसं शारीरं वा,

---

१ उक्तं च सिद्धस्तवे—

"इक्को वि नमुक्कारो जिणवरवसहस्स वद्धमाणस्स ।
संसारसागराओ तारेइ नरं व नारिं वा ॥
[ एकोऽपि नमस्कारो जिनवरवृषभाय वर्धमानाय ।
संसारसागरात् तारयति नरं वा नारीं वा ॥ ]

२ 'जइवि न सम्मत्तजढो अहव ण बद्धाउओ पुव्विं' इति उत्तरार्धम्, सम्पूर्णा च्छाया तु यथा—

सम्यग्दृष्टिर्जीवो विमानवर्ज्यं न बध्नाति आयुः ।
यद्यपि न त्यक्तसम्यक्त्वोऽथवा न बद्धायुष्कः पूर्वम् ॥

३ 'द्वन्द्वे' इति क पाठः । ४ 'वन्ति' इति क पाठः ।

दुर्गतस्य भावो दौर्गत्य–दारिद्र्य, दुःख च दौर्गत्य चेति 'द्वन्द्वः' । केषु सत्स्वपि ? 'नरतिर्यक्ष्वपि' नराश्च तिर्यञ्चश्च नरतिर्यञ्चः इति 'द्वन्द्वः' तेष्वपि, नरतिर्यग्लक्षणभवान्तेष्वपीत्यर्थः । एतावता यथाकथञ्चित् जीवाना (समुद्भवेऽपि तत्र तत्र प्रणति)करणात् तत्रापि मानसशरीरदुःख-भाजो न भवेयुः । न जातुचित् दारिद्र्योपहताश्च । यदि च जीवाः तिर्यक्षु कदाचिदुत्पद्यन्ते तदा तव प्रणतिप्रसादात् कमनीयकनक-रत्न-चिन्तामणि कल्पद्रुम-पट्टतुरग-जयकुञ्जरादिभावमापन्नास्त-त्रापि न दुःखदौर्गत्य प्राप्नुवन्तीति फलितार्थः । क्वचित् 'दुक्खदोहग्गं' इति पाठः, तत्र दुःख च दौर्भाग्य चेति 'द्वन्द्वः' एवानुगन्तव्यः ॥ ३ ॥

ह० व्या०—अथ स्तुतिमन्त्रादि विनैव श्रीपार्श्वनाथप्रणाममात्रेणैव सर्वं फलं स्यादित्याह—चिट्ठउ दूरे इति । मन्त्रस्तव स्तुतिरूपः प्रागुक्तोऽष्टादशाक्षरात्मकः स तु दूरे तिष्ठतु–आस्ता, तस्य किं कथनीयमिति, किन्तु तव–भवतः प्रणामोऽपि त्वयि विषये कृतः प्रणामो–नमस्कारोऽपि बहुफलो भवति । बहूनि–प्रचुराणि सौभाग्या-ऽऽरोग्य-धन-धान्य-कलत्र पुत्र-द्विपद्-चतुष्पद्-राज्य स्वर्गादीनि फलानि यस्मात् सः । अन्यच्च–त्वत्प्रणामात् जीवाः–प्राणिनो नरतिर्यक्षु दुःख-दौर्भाग्य न प्राप्नुवन्ति । 'दुक्खदोगच्च' इति पाठे दुःखदौर्गत्य न प्राप्नुवन्ति । त्वन्नमस्कारकर्तारः सम्यग्दृष्टयो जीवाः प्रायो वैमानिकदेवेषूत्पद्यन्ते, कदाचित् पूर्वबद्धायुषो भवपरम्परया वा नरेषु तिर्यक्षु उत्पद्यन्ते तथापि तत्र तेषा दुःख शारीर मानस च दुर्गतस्य भावो दौर्गत्य-दारिद्र्य न भवति, नरेषु रोगादिरहितत्वेन सम्पद्यमानसमीहितार्थतया च शारीर मानसं च दुःख न प्राप्नु-वन्ति, तथा ऋद्धिसमृद्धतया च दारिद्र्यभाजोऽपि न भवन्ति । तिर्यक्षु तु कमनीयकनक-रत्न-चिन्तामणि-कल्पद्रुम-पट्टतुरङ्गम-जयकुञ्जरादिषूत्पद्यन्ते पूजा च प्राप्नुवन्ति । अथवा नरा एव तिर्यञ्चो नरतिर्यञ्चः–नृपशवो नृषु पशुतुल्या बालगोपालकृषीवलादयस्तेष्वपि दुःखदौर्भाग्य न प्राप्नुवन्ति । त्वत्प्रसादात् तेऽपि सदा सुखिन एव स्युरिति ॥ ३ ॥

जि० वृ०—साम्प्रत चतुर्थगाथार्थः स्पष्टीक्रियते—

**तुह सम्मत्ते पॅत्ते, ँचिंतामणिकप्पपायवब्भहिए ।**
**पावंति अविग्घेण, जीवा अयरामर ठाणं ॥ ४ ॥**

**[ तव सम्यक्त्वे प्राप्ते चिन्तामणिकल्पपादपाभ्यधिके ।**
**प्राप्नुवन्त्यविघ्नेन जीवा अजरामर स्थानम् ॥ ]**

पूर्वगाथाया भगवत्प्रणामात् सम्यक्त्व तत्फल चोक्तम् । अनया तु गाथया प्रकर्षकोटि-प्राप्त तस्यैव पर्यन्तफलमुच्यते । तव सम्बन्धिनि नेतरीयसम्बन्धिनि सम्यक्त्वे विशिष्टप्रमाणात्मके देवतत्त्व गुरुतत्त्व धर्मतत्त्वनिश्चयरूपे वा प्राप्ते–लब्धे सति । किंविशिष्टे ? चिन्तामणिः–चिन्तिता-

१ धनुश्चिह्नान्तर्गतोऽय पाठोऽनुमानिक , मूलप्रतौ अक्षराणामस्पष्टत्वात् ।

२ 'कमनीय' इति ख पाठ । ३ 'दयस्त्रापि' इति ख पाठ । ४ 'दन्द्वे' इत्यपि पाठ । ५ 'ऽचिंता-मणि०' इत्यपि सम्भवति ।

[illegible] कल्पादप–कल्पवृक्ष [illegible] कल्पद्रो इव, तयो द्वन्द्व [illegible] –अविघ्नेनाचिन्त्य [illegible] हि मनकामनोहिकमर फलं दातुर्माधर्णा, तत्प्रभावस्तु चिन्तामणिकल्पपादपाभ्यधिके [illegible] प्रदानसमर्थ इति पुनश्चेद तत्ऽभ्यधिकम् स्यादिति । तस्मिन् प्राप्ते सति किमित्याह—प्राप्नुवन्ति–लभन्ते । विघ्नानामभावोऽविघ्नं इत्यव्ययीभावस्तेन अविघ्नेन, निष्प्रत्यूहमित्यर्थः । जीवाः–प्राणिनोऽजरामरं स्थान–पदं, न विद्यते जरा यत्र तदजरं न म्रियन्ते यस्मिन्निति अमरं, बाहुलकात्, अजरं च तदमरं चेति विशेषणकर्मधारये–ऽजरामरं, मुक्तिपदमित्यर्थः ॥

पार्श्वयक्षादिपक्षे पुनरित्थं घटना—

सम्मतम्–बहुमतस्य भावः साम्मत्यं, बाहुल्यमित्यर्थ तस्मिन् । तव पार्श्वयक्षस्य पद्मावत्या धरणेन्द्रस्य च सम्बन्धिनि प्राप्ते चिन्तामणिकल्पपादपाभ्यधिके ततोऽप्यतिशयितफलदायित्वात् । अथवा पीयत इति पाय'–पानक च गो–भोजन चिन्तामणिकल्पौ मनश्चिन्तितार्थपूरणप्रवणत्वाच्चिन्तारत्नतुल्यौ यौ पायवल्भौ ताभ्या हित'–अनुकूलः, तत्सम्पादकत्वात् तस्मिन् । यद्वा अकारलोपात् अचिन्ता–निश्चिन्ता गत प्रयासवर्जिता इति जीवानां विशेषणम् । मणिभिः–कर्केतनाद्यै' कल्प' कल्पन–रचना येषा तानि मणिकल्पानि, रत्नघटितानीत्यर्थः । तथाविधानि यानि 'पाय' त्ति पात्राणि–स्थाल्यादिभाजनानि तेषु वल्भो–भोजन तेन कृत्वा तस्मै वा हिते, तव साम्मत्ये त्वत्प्रसादसुभगानामैश्वर्यशालितया रत्नमयपात्रेषु भोजनोर्पपत्ते' । प्राप्नुवन्त्यविघ्नेन जीवाः स्थान–पद प्राज्यसाम्राज्यादिकम् । अथ कथ स्थानशब्देन राज्यादिक लभ्यते ? असाधारणविशेषणसामर्थ्यादिति ब्रूमः । तच्च विशेषण 'अयरामर' त्ति । अय'–अनुकूलदैव तेन रामा–रमणीया रा–दीप्तिर्यत्र तदयरामरम् । उत्कृष्टभाग्यवशाद्धि राज्यादिक एव पदे दीप्तिरतितरामुत्पद्यते पुरुषाणाम्, यस्तव सम्मतो भवेत् सोऽनुकूलदैवान्वित राज्यादिपदमवाप्नोतीत्याकूतम् । इति गाथार्थ ॥ ४ ॥

सि० व्या०—तुह सम्मत्ते इति । जीवाः–भव्यप्राणिन' अजरामर स्थान–मोक्षपद अविघ्नेन–विघ्नाभावेन प्राप्नुवन्ति–लभन्त इत्यर्थ' । न विद्यते जरा–विस्रसा यत्र तत् अजर, न म्रियन्ते अस्मिन् इत्यमर, बाहुलकात्, अजर च तत् अमर चेति 'विशेषणकर्मधारय' । कस्मिन् सति ? तव

---

१ 'लभन्ति' इति ग पाठ । २ 'मुक्तिमित्यथ' इति क ग पाठ ।

३ छाया चैवम्—

तव साम्मत्ये प्राप्ते चिन्तामणिकल्पपादपाभ्यधिके चिन्तामणिकल्पपायवल्भहिते अचिन्ता मणिकल्पपात्रवल्भहिते वा ।

प्राप्नुवन्त्यविघ्नेन जीवा अय राम र स्थानम् ॥

४ 'भ्यकमि०' इति ख–पाठ । ५ 'प्रदत्वा०' इति ग पाठ । ६ 'पपत्तिः' इति क–पाठ । ७ 'भवति' इति ख पाठः ।

समन्विनि सम्यक्त्वे विशिष्टप्रणामात्मके देवतत्त्वगुरुतत्त्वधर्मतत्त्वनिश्चयरूपे वा सम्यक्त्वे लब्धे सति–प्राप्ते सति । आहुश्च—

"या देवे देवताबुद्धि–र्गुरौ च गुरुतामतिः ।
धर्मे च धर्मधीः शुद्धा, सम्यक्त्वमिदमुच्यते ॥ १ ॥"

इति योगशास्त्रे (प्र० २, श्लो० २) श्रीहेमचन्द्रसूरिचरणाः । कथम्भूते सम्यक्त्वे ? 'चिन्तामणिकल्पपादपा[भ्याम]भ्यधिके' (चिन्तामणिश्च कल्पपादपश्च) चिन्तामणिकल्पपादपे 'इतरेतरद्वन्द्वः' चिन्तामणिकल्पपादपाभ्या अभ्यधिक–अत्युत्कृष्ट चिन्तामणिकल्पपादपाभ्यधिकं तस्मिन् चिन्तामणिकल्पपादपाभ्यधिके इति 'तत्पुरुषः' । तौ हि प्रसन्नावप्यैहिक फल दातुमीशौ, त्वत्प्रणामस्तु चिन्तातीतमोक्षलक्षणपारलौकिकफलप्रदानसमर्थ इति युक्तमेव तयोरप्यधिकत्वमिति भावः ॥ ४ ॥

ह० व्या०—भगवत्प्रणामात् सम्यक्त्वं भवति । अतः सम्यक्त्वस्य फलमाह—तुह सम्मत्ते [1] लद्धे इति । हे श्रीपार्श्वजिन ! तव सम्यक्त्वे विशिष्टप्रणामात्मके अथवा भवत्प्रणीतसम्यग्दर्शने तत्त्वश्रद्धानरूपे ते–तव मते वा प्राप्ते–लब्धे सति जीवाः–प्राणिनः अविघ्नेन –निर्विघ्न अजरामर स्थान, नास्ति जरा यत्र तदजर, न म्रियन्ते यस्मिन् तदमर अजर च तदमर च अजरामर–जरामरणरहित स्थान मोक्ष प्राप्नुवन्ति–लभन्ते । कथम्भूते तव सम्यक्त्वे ? चिन्तामणिकल्पपादपाभ्यधिके [2] चिन्तामणिः–मनश्चिन्तितार्थदायकं रत्न, कल्पपादपः–कल्पवृक्षो वाञ्छितार्थपूरकस्ताभ्यामप्यधिक–अधिकफलप्रदम् । चिन्तामणिकल्पपादपौ तु प्रसन्नौ सन्तौ ऐहिक फल दातु समर्थौ, त्वत्प्रणामस्तु चिन्तातीतमोक्षलक्षणपारलौकिकफलप्रदानसमर्थ इति युक्तमेव ताभ्यामधिकत्वम् ॥ ४ ॥

जि० सू०—सम्प्रति निगमयन् प्रणिधानप्रधाना पञ्चमगाथामाह—

**इअ [3] संथुओ महायस !, भत्तिब्भरनिब्भरेण हिअएण [4] ।**
**ता देव ! [5] देसु बोहिं, भवे भवे पासजिणचंद ! ॥ ५ ॥**

[ इति संस्तुतो [6] महायशः ! भक्तिभरनिर्भरेण हृदयेन ।
तस्माद् देव ! देहि बोधि, भवे भवे पार्श्व ! जिनचन्द्र ! ॥ ५ ॥

इति–पूर्वोक्तप्रकारेण संस्तुतः–सम्यग् वर्णितस्त्वं, सामर्थ्यान्मयेति गम्यम् । हे 'महायशः !' महत्–त्रैलोक्यव्यापि यशः–कीर्तिर्यस्य तस्यामन्त्रणम् । अथवा अमा–रोगास्तान् हन्तीत्यमहा, आगः–पाप स्यति–अन्त नयतीत्यागसः, ततो विशेषणकर्मधारये अमहागसः तस्यामन्त्रणम् । केन करणभूतेन संस्तुत इत्याह–भक्तेः–आन्तरप्रीतेर्भर –प्राग्भारस्तेन निर्भर–सम्पूर्णं तेन तथा-

---

१ 'पत्ते' इत्यधिक ख पाठ । २ 'भ्यामप्यधिके' इति क पाठ । ३ 'इय' इति ग पाठ । ४ 'हिअयेण' इति क्वचित् । ५ 'दिज' इत्यपि पाठ, तत्र 'दद्यात्' इति छाया । ६ 'अमहागस !' इत्यपि सम्भवति ।

धर्मदायी देवगणिनिजो रक्षितः, यन्नायस्य-यन्नाथश्च उत्कृष्टकामभावी अन्तःकरणपुण्य-फलप्रदो भवेत्, ततो द्वन्द्वे गाम्भीर्यसाम्यादिक-अनिवचनेनाधिकसाम्यमिति विग्रहः । तौ हि प्रणतावर्ष्याधिक्येन फल दातुमीशौ, त्वत्प्रणामस्तु चिन्तातीतमोक्षलक्षणपारलौकिकफल प्रदानसमर्थ इति युक्तमेव ततोऽप्यधिकत्वमस्तीति । तस्मिन् प्राप्ते सति किमित्याह—प्राप्नुवन्ति-लभन्ते । विघ्नानामभावोऽविघ्न इत्यर्थाभावे तेन अविघ्नेन, निष्प्रत्यूहमित्यर्थः । जीवा -प्राणिनोऽजरामर स्थान-पद, न विद्यते जरा यत्र तदजर न म्रियन्ते यस्मिन्नित्यमर, बाहुलकादल्, अजर च तदमर चेति विशेषणकर्मधारयेऽजरामर, मुक्तिपदमित्यर्थ ॥

पार्श्वयक्षादिस्तवपक्षे पुनरित्थ घटना—

सम्मतस्य-बहुमतस्य भाव' साम्मत्य, बाहुल्यमित्यर्थ तस्मिन् । तव पार्श्वप्रभस्य यक्षा-पत्या धरणेन्द्रस्य च सन्निधिनि प्राप्ते चिन्तामणिकल्पपादपाभ्यधिके ततोऽप्यतिशयितफलदा-यित्वात् । अथवा पीयत इति पाय'—पानक वल्भो—भोजन चिन्तामणिकल्पौ मनश्चिन्तितरसपूर-णप्रवणत्वाच्चिन्तारत्नतुल्यौ यौ पायवल्भौ ताभ्या हित'—अनुकूल:, तत्सम्पादकत्वात् तस्मिन् । यद्वा अकारलोपात् अचिन्ता—निश्चिन्ता मन प्रयासवर्जिता इति जीवाना विशेषणम् । मणिभि:-कर्केतनाद्यै' कल्प' कल्पन-रचना येषा तानि मणिकल्पानि, रत्नघटितानीत्यर्थ. । तथाविधानि यानि 'पाय' त्ति पात्राणि-स्थाल्यादिभाजनानि तेषु वल्भो—भोजन तेन कृत्वा तस्मै वा हिते, तव साम्मत्ये त्वत्प्रसादसुभगानामैश्वर्यशालितया रत्नमयपात्रेषु भोजनोपपत्ते' । प्राप्नुवन्त्यविघ्नेन जीवाः स्थान-पद प्राज्यसाम्राज्यादिकम् । अथ कथ स्थानशब्देन राज्यादिक लभ्यते ? असाधारणवि-शेषणसामर्थ्यादिति ब्रूम' । तच्च विशेषण 'अयरामर' त्ति । अय:—अनुकूलदैव तेन रामा—रम-णीया रा—दीप्तिर्यत्र तदयरामरम् । उत्कृष्टभाग्यवशाद्धि राज्यादिक एव पदे दीप्तिरतितरामुत्पद्यते पुरुषाणाम्, यस्तव सम्मतो भवेत् सोऽनुकूलदैवान्वित राज्यादिपदमवाप्नोतीत्याकूतम् । इति गाथार्थः ॥ ४ ॥

सि० व्या०—तुह सम्मत्ते इति । जीवा -भव्यप्राणिनः अजरामर स्थान—मोक्षपद अविघ्नेन -विघ्नाभावेन प्राप्नुवन्ति-लभन्त इत्यर्थ' । न विद्यते जरा-विस्रसा यत्र तत् अजर, न म्रियन्ते अस्मिन् इत्यमर, बाहुलकात्, अजर च तत् अमर चेति 'विशेषणकर्मधारय.' । कस्मिन् सति ? तव

---

१ 'लभन्ति' इति ग पाठ । २ 'मुक्तिमित्यर्थ ' इति क ग पाठ ।

३ छाया चैवम्—

तव साम्मत्ये प्राप्ते चिन्तामणिकल्पपादपाभ्यधिके चिन्तामणिकल्पपायवल्भहिते अचिन्ता मणिकल्पपात्र वल्भहिते वा ।

प्राप्नुवन्त्यविघ्नेन जीवा अय राम र स्थानम् ॥

४ 'भ्यकमि०' इति ख-पाठ । ५ 'मदत्वा०' इति ग पाठ । ६ 'पपत्तिः' इति क-पाठ । ७ 'भवति' इति ख-पाठ ।

अथ धरणेन्द्रपंक्षे—

( इय संथुओ महायसभत्तिब्भरनिब्भरेण ! हियएण ! ।
ता देव ! देसु बोहिं भवे भवे पासजिनचद ! ॥
इति संस्तुतो महायशोभक्तिभरनिर्भरैनः ! हृदयगेन ! ।
तस्मात् देव ! देहि बोधिं भवे भवे पाशजिनचन्द्र ! ॥ )

इति–पूर्वोक्तरीत्या संस्तुतः, मयेति गम्यते । तथा महायशाः श्रीपार्श्वनाथस्तस्य भक्तिः–सेवनं तस्याः भरः–अतिशयस्तेन निर्भर–भररहितम्, अल्पीभूतमिति यावत् । एनः–पाप यस्य तस्यामन्त्रण हे महायशोभक्तिभरनिर्भरैनः ! । हे हृदयगेन ! हृदयेन–उरसा गच्छन्ति (इति) हृदयगा–उरगास्तेषामिनः–स्वामी नागराजो–धरणेन्द्रः तस्यामन्त्रण हे हृदयगेन ! 'किसलय-कालायस-हृदये यः' ( सिद्ध० ८–१–२६९ ) इत्यनेन सस्वरयलोपे 'क ग-च-ज-त द-प यवा प्रायो लुग्' ( सिद्ध० ८–१–१७७ ) इति दगयोर्लोपे च 'हिअय' त्ति रूपम् । तत इनशब्देन सन्धौ हिअयेण त्ति सिद्धम् । ता इति तस्माद् देव !–भवनपतीन्द्र ! दत्स्व बोधिं मह्य भवे भवे, पाश–कर्मबन्ध जयतीत्यपि पूर्ववत् णे च, पासजिणा–पाशजेतारः सुविहितसाधवस्तान् प्रति चन्द्र इवोपसर्गतापनिर्वापणेनाह्लादकत्वात् तस्यामन्त्रण हे पासजिणचन्द ! । यद्वा पाशेन जयति शत्रून्–वश नयति इति प्राकृते पासजिणा–पद्मावती ता चन्दति–आह्लादयति भर्तृत्वात् च देवी तस्य सम्बोधनम् । 'दीर्घ ह्रस्वौ मिथो वृत्तौ' ( सिद्ध० ८–१–४ ) इति ह्रस्वे पासजिण इति सिद्धम् । इति गाथार्थः ॥ ५ ॥

उपसर्गहरस्तोत्रे, व्याख्या किञ्चिन्मयाऽरचि ।
याऽत्र चार्नोचिती वाच्ये, सा शोध्या कृपया बुधैः ॥ १ ॥
वृत्तिः सैषा विशेषोक्ति–रोचिष्णुः चारुचेतनैः ।
'अर्थकल्पलता'नाम, चिररात्राय वाऽर्च्यताम् ॥ २ ॥
सवद्विक्रमभूपतेः शरऋतुदर्चिर्मृगाङ्कमिते
पौषस्यासितपक्षभाजि शशिना युक्ते नवम्या तिथौ ।
शिष्यः श्रीजिनसिंहसूरिसुगुरोर्वृत्तिं व्यधात्तामिमा
श्रीसाकेतपुरे जिनप्रभ इति ख्यातो मुनीना प्रभुः ॥ ३ ॥

इति श्रीसमसरणं समाप्त ॥ शुभ भवतु ॥ श्रीरस्तु ॥ ग्रन्थाग्र २७१ ॥

प्रत्यक्षर निरूप्यास्या, ग्रन्थमान विनिश्चितम् ।
अनुष्टुभा च द्विशत्ये–कसप्तति(२७१)समन्विता ॥ १ ॥

---

१ 'पक्ष इति सस्तुस्त्व महा०' इति ख पाठ । २ 'सेवा' इति ख-पाठ । ३ 'चच्यताम्' इति ख-पाठ, 'चम्यम् (?)' इति ग पाठ । ४ १३६-प्रमिते इत्यथ । ५ 'समाप्ता चेय उपसर्गहरस्तवविवृत्ति । कृतिरिय श्रीमज्जिनप्रभसूरेरिति वृत्ति ग्रन्थाग्र०' इति ख पाठ । ६ न चाय पाठोऽसमीचीन, खरतरगच्छीयानां समसरणेषु उपसर्गहरस्तोत्रस्य अन्तिमत्वात् । ७ 'एकसप्ततियुक्त शतद्वयमनुष्टुभाम्' इति ख पाठ ।

भूरि हर्षेण–अत्ला कालेन । गा इति गमाहा । संस्तुत्य हि प्रभु प्रार्थयते । ननस्तु मनाद् त्वं सम्युगमनात् हे 'देव !' दीव्यती–स्तुतो जिनराजनैरिति देवः–आराध्यस्तस्यामन्त्रणम् । 'देसु' त्ति देहि–प्रयच्छ । अर्थात् मम मोक्ष, बोधि–रत्नत्रयप्राप्ति प्रेत्य जिनधर्मावाप्ति वा भवे भवे–जन्मनि जन्मनि, यावन्मोक्षं नाप्नोमीति भावः । हे पार्श्व !–श्रीपार्श्वनाथ ! 'जिनचन्द्र !' रागादिजेतृत्वाद् जिना'–सामान्यकेवलिन. तेषु मध्ये चन्द्र इव चन्द्र', चतुस्त्रिंशदतिशयसम्पत्समन्वितेनाह्लादकत्वाज्जिनचन्द्रस्तस्यामन्त्रणम् ॥

अपिशब्दस्यान्यपदेन सम्बन्धेन क्रमेणार्थयोजना—हे पार्श्वयक्ष ! इति 'संस्तुतः त्वं महायशा'–प्रख्यातो भगवान् पार्श्वनाथ' तव विषये योजनां भक्तिभरनिर्भरेण हृदयेन मनसा उपलक्षितविशेषणे तृतीया । तस्मात् देव !–व्यन्तरजातीय ! दत्स्व–वितर बोधि भवे भवे । न चास्माद् बोधिप्रार्थनमनौचितीमश्नुते "सम्मद्दिट्ठी देवा" (चउविसत्थये गा० ४७) इति पूर्वाचार्यैरपि भणनात् । न चायं न सम्यग्दृष्टि परमार्हतत्वात्, तथा विशेषणमुक्तमाचार्येण 'जिणचन्द' त्ति । जिन एव श्रीमदर्हन्नेव चन्दतीति चन्द्र'–आह्लादको यस्यासौ जिनचन्द्र' तस्य सम्बोधनम् ॥

अथ पद्मावतीपक्षे—

(इय सथुओ महाऽयसभत्तिब्भरनिब्भरे ण हियए ण ।
ता देवदेऽसुबोहिं भवे भवे पास जिण चद ॥
इति सस्तुता उ मम अयशोभक्तिभरनिर्भरे ! न हितदे ! न ।
तस्मात् देवते ! असुबोधिं भवे भवे प्रास्य जय चन्द ॥)

इति सस्तुता त्वम् । उ' इति निपात' सम्बोधने । सन्धौ कृते सस्तुतो इति । 'मह' त्ति मम–स्तोतु । अयशोभक्तिभरनिर्भरेण अयश'–अपकीर्ति., आय–धनादिलाभ सन्ति–समापयन्तीति आयसाः–शत्रव तस्य तेषा वा भक्तिः–भजन तत्र विषये यो भर'–अत्याग्रह. तेन निर्भरा–पूर्णा तस्या आमन्त्रणम् अयशोभक्तिभरनिर्भरे ! आयसभक्तिभरनिर्भरे ! वा । 'ण हियए ण' त्ति "द्वौ नञौ प्रकृतार्थं गमयत" इति न्यायान्न न हितदे !, अपि तु हितदे ! । हितम्–अनुकूल वस्तु भक्तेभ्यो ददातीति हितदा तस्या आमन्त्रणम् । ता–तस्मात् देवदे इति देवते ! पद्मावति ! देवि ! 'व्यत्ययश्च' (सिद्ध० ८–४–४४७) इति प्राकृतवचनात् शौरसेनीं विनाऽपि तकारस्य द' । शोभना बोधि. सुबोधि. न सुबोधिरसुबोधिः कुतीर्थ्यभिप्रेता सातिचारा वा बोधिरित्यर्थ' ताम् । 'एदोतः पदान्तेऽस्य लुग्' (सिद्ध० १–२–२७) इति अलोप । 'भवे भवे पास' त्ति प्रास्य–प्रकर्षेण क्षिप–निराकुरु । तथा 'जिण' त्ति । जय 'चि जि-श्रु-हु स्तु-लू पू धूगा णो ह्रस्वश्च' (सिद्ध० ८–४–२४१) इति णोऽन्त । सर्वोत्कर्षेण वर्तस्वेत्यर्थ । किञ्चान्यत्—चन्द–दीप्यस्व, स्वमाहात्म्येन चिर भ्राजस्वेति भाव' ॥

---

१ 'प्रयच्छतु' इति ग पाठ । २ स्व सस्तुत इति क पाठ । ३ 'आयसभक्ति०' इत्यपि सम्भवति । ४ 'अयसभत्तिब्भरनिब्भरेण' इति ख पाठ । ५ 'ममस्तयश्चेति' इति ग पाठः । ६ 'किञ्च तथा चद त्ति चन्द्रस्व–महिम्ना शोभस्व' इति क–पाठ ।

अथ धरणेन्द्रपक्षे[1]—

( इय संथुओ महायसभत्तिब्भरनिब्भरेण! हियएण! ।
ता देव! देसु बोहिं भवे भवे पासजिनचंद! ॥
इति सस्तुतो महायशोभक्तिभरनिर्भरैनः! हृदयगेन! ।
तस्मात् देव! देहि बोधिं भवे भवे पाशजिनचन्द्र! ॥ )

इति–पूर्वोक्तरीत्या संस्तुतः, मयेति गम्यते। तथा महायशाः श्रीपार्श्वनाथस्तस्य भक्तिः–सेवनं[2] तस्याः भरः–अतिशयस्तेन निर्भर–भररहितम्, अल्पीभूतमिति यावत् । एनः–पाप यस्य तस्या-मन्त्रण हे महायशोभक्तिभरनिर्भरैनः! । हे हृदयगेन! हृदयेन–उरसा गच्छन्ति (इति) हृदयगा–उरगास्तेषामिनः–स्वामी नागराजो–धरणेन्द्रः तस्यामन्त्रण हे हृदयगेन! 'किसलय-कालायस-हृदये यः' ( सिद्ध० ८–१–२६९ ) इत्यनेन सस्वरयलोपे 'क ग-च-ज-त-द-प यवा प्रायो लुग्' ( सिद्ध० ८–१–१७७ ) इति दगयोर्लोपे च 'हिअय' त्ति रूपम्। तत इनशब्देन सन्धौ हिअयेण त्ति सिद्धम् । ता इति तस्माद् देव!–भवनपतीन्द्र! दत्स्व बोधिं मह्य भवे भवे, पाश–कर्मबन्ध जयतीत्यचि पूर्ववत् णे च, पासजिणा–पाशजेतारः सुविहितसाधवस्तान् प्रति चन्द्र इवोपसर्गताप-निर्वापणेनाह्लादकत्वात् तस्यामन्त्रण हे पासजिणचन्द! । यदिवा पाशेन जयति शत्रून्–वश नयति इति प्राकृते पासजिणा–पद्मावती ता चन्दति–आह्लादयति भर्तृत्वात् च देवी तस्य सम्बोधनम् । 'दीर्घ ह्रस्वौ मिथो वृत्तौ' ( सिद्ध० ८–१–४ ) इति ह्रस्वे पासजिण इति सिद्धम् । इति गाथार्थः ॥ ५ ॥

उपसर्गहरस्तोत्रे, व्याख्या किञ्चिन्मयाऽरचि ।
याऽत्र चानौचिती वाच्ये, सा शोध्या कृपया बुधैः ॥ १ ॥
वृत्तिः सैषा विशेषोक्ति–रोचिष्णुः चारुचेतनैः ।
'अर्थकल्पलता'नाम, चिररात्राय वाऽर्च्यताम्[3] ॥ २ ॥
सवद्विक्रमभूपतेः शरऋतूदर्चिर्मृगाङ्कमिते[4]
पौषस्यासितपक्षभाजि शशिना युक्ते नवम्या तिथौ ।
शिष्यः श्रीजिनसिंहसूरिसुगुरोर्वृत्तिं व्यधात्तामिमा
श्रीसाकेतपुरे जिनप्रभ इति ख्यातो मुनीना प्रभुः ॥ ३ ॥
इति[5] श्रीसं[6]स्मरणं समाप्त ॥ शुभ भवतु ॥ श्रीरस्तु ॥ ग्रन्थाग्र २७१ ॥

प्रत्यक्षर निरूप्यास्या, ग्रन्थमान विनिश्चितम् ।
अनुष्टुभा[7] च द्विशत्ये–कसप्तति(२७१)समन्विता ॥ १ ॥

१ 'पक्ष इति सस्तुस्व महा०' इति ख पाठ । २ 'सेवा' इति ख-पाठ । ३ 'चर्च्यताम्' इति ख-पाठ, 'चर्च्यम् (?)' इति ग पाठ । ४ १३६५प्रमिते इत्यर्थ । ५ 'समाप्ता चेय उपसर्गहरस्तवविवृत्ति । कृतिरिय श्रीमज्जिनप्रभसूरेरिति वृत्ति ग्रन्थाग्र०' इति ख पाठ । ६ न चाय पाठोऽसमीचीन, खरतरगच्छीयाना सप्तस्मरणेषु उपसर्गहरस्तोत्रस्य अन्तिमत्वात् । ७ 'एकसप्ततिसयुक्त शतद्वयमनुष्टुभाम्' इति ग पाठ ।